न च धर्म्यर्थं धर्माणां वा कृते धर्मव्याख्यानं युज्यते, तेषां स्वार्थाभावात् । पुरुषेणैवैषामर्थवत्त्वम् । तस्मादध्यात्मसम्बन्धादस्य **त्रिकल्पधर्मस्य** विशेषपरीक्षा प्रवर्त्यते ।

अपरिणामिनी हि चितिशक्तिः, परिणामिनि शुद्धसत्त्वात्मनि महत्तत्त्वे प्रतिसंक्रान्तेव सान्निधिमात्रेण तस्मिन् संस्काररूपान् संस्थानविशेषान् धर्माञ्जनयति। ते च धर्माश्चत्वारः, स्वस्वानुरूपाणि धर्मो ज्ञानं वैराग्यमैश्वर्यमिति महत्तत्त्वे लक्षणानि जनयन्ति। ते लक्षणधर्मा महत्तत्त्वेऽभिव्यज्यमाना भावशब्देन व्यपदिश्यन्ते। पुरुषसन्निधिमात्रजन्यत्वाद् बाह्यनिमित्तनिरपेक्षत्वान्महत्तत्त्व एते संस्कारधर्माः प्रधाने गुणा इव प्राकृतिका उक्ताः ।

पुरुषस्यानादिप्रवृत्तिवशान्महत्तत्त्वे गुणवैषम्यविमर्दादेते सांसिद्धिकाः सत्त्वधर्मा विकारं प्रतिपन्ना वैकृतिका उच्यन्ते। तथा च क्रियाशीलं रजस्तदतिशये क्षोभविशेषात्संस्कारविशेषा जायन्ते। तेषां पुनस्तापलोभादिलक्षणैरभिव्यक्तिः । एवं स्थितिशीलं तमस्तदतिरेके जाडयातिशयात् संस्कारविशेषस्तस्य मोहादिलक्षणैरभिव्यक्तिः। एवमंशांशकल्पनया रजस्तमोभ्यां संसृष्टे सत्वे नानाभेदविशिष्टो धर्मपरिणामः प्रातिनियतलक्षणैरेभिर्भावैरनुमितसद्भावः प्रवर्तते। ते च भावा अध्यात्मतन्त्रे सुतरां प्रपञ्चिता द्रष्टव्याः।

योऽयं बुद्धिसत्वे धर्मलक्षणपरिणाम उक्तः सोऽस्मिन् तन्त्रे शासनानुरोधादात्मनि वेदितव्यः।

अन्या हि चितिशक्तिरन्यच्च महत्तत्त्वम्। तस्मिन् प्रति-

संक्रान्तेव प्रतिबिम्बिता चितिशक्तिर्धर्मवैराग्यैश्वर्यरूपबोधात्मिका वृत्तिरेव बुद्धिराख्याता। तथा च चिदधिवासितं बुद्धिवृत्तिविशिष्टं महत्तत्त्वं संख्येत्याभिधीयते। चितिशक्तिस्तु पुरुष उच्यते। महत्तत्वसहितः पुरुषोऽत्र तंत्रे जीवात्मेत्याभिधीयते बुद्धिवृत्तिस्त्वस्मिन्पक्षे आत्मनो गुणोऽभ्युपगम्यते।

आस्मिँस्तन्त्रे त्वचेतनस्य महतश्चेतनेन पुरुषेणानादिसम्बन्धादुभयोरव्यतिरेकेण ग्रहणादात्माऽभ्युपगम्यते। बुद्धिश्चास्य गुणत्वेनात्मसंगृहीता द्रष्टव्या। पुनश्चात्मनः प्रभुत्वात्सुखदुःखादिधर्मफलस्य भोक्तृत्वाच्चैते धर्मादयो भावा आत्मनि व्यपदिश्यन्ते। इत्यात्मसम्बन्धादुक्तत्रिकल्पो धर्मो व्याख्यातः।

धर्मादिभावनां परिशुद्ध्यर्थं पुरुषस्येतिकर्तव्यतारूपो बुद्धिपूर्वको यः प्रयत्नश्चोद्यते स चोदनालक्षणो धर्मोऽनुष्ठानधर्म उच्यते। सोऽपि पुरुषेण कर्तव्यतया धारणात् कार्यकारणोपचाराद्वा धर्म उच्यते।

यथाऽऽयुर्वेदे शरीरेन्द्रियविषयेषु गुणाधानार्थं यथायोगं नानोपचारा विधीयन्ते तेषामनुष्ठानं धर्मः, तथैवाभ्युदयनिःश्रेयससिद्धौ ये नियमाः कल्पशास्त्रे विहितास्तेषामनुष्ठानं धर्मः।

तथाहि पुरुषे लक्ष्यमाणा हिंसावृत्तिरात्मनि हिंसालक्षणविशिष्टं संस्थानधर्मं गमयति। हेया च हिंसावृत्तिरुपादेया चाहिंसावृत्तिरिति तथा कर्म कर्तव्यं यथाऽत्मनि हिंसालक्षणं संस्कारसंस्थानमपेयादाहिंसालक्षणं च संस्थानमुपजायेत। तत्र यद्विहितं

कुशलानुष्ठानं स आचारः। धर्माणामतीन्द्रियत्वात्तेषां परिवर्तने- नास्ति दृष्टोपायसम्भवस्तत्रोपायस्तु शास्त्रचोदितो विज्ञायते।

अपि च वर्तमानधर्मं नाशयति अभीष्टं धर्मान्तरं चोदयति भावयतीति चोदनालक्षणोऽयमनुष्ठानधर्म उक्तः। अयमेव **धर्मस्य चतुर्थः कल्प** उच्यते।

उक्तश्चतुष्पाद्धर्मः। तत्र सिद्धान्तमूलमाचारधर्मज्ञानम्। न हि पदार्थधर्मानविज्ञाय कर्तव्याकर्तव्यविषयव्यवस्थाविकल्पबहुल- माचारधर्मं कश्चित् प्रतिपत्तुमर्हति तस्माच्चतुर्थकल्पस्य धर्मस्य विशुद्ध्यर्थं पदार्थधर्मव्याख्यानमिह ग्रन्थविषयत्वेन प्रतिज्ञायते। व्याख्यानस्वरूपमुपरिष्टात् तृतीयसूत्रभाष्ये वक्ष्यते।

व्याख्यास्याम इति बहुवचनं तन्त्रस्य स्वबुद्धिकल्पनयैकपुरुष- प्रवर्तितत्वापात्तिनिवारणार्थम्। यथा साक्षात्कृतधर्मभिः परमाचार्यै- रनादिपरम्परया श्रुतिस्मृत्यनुसारिधर्मव्याख्यानं प्रवर्तितं तथैवेदा- नीन्तनैरस्माभिरपि तन्त्राचार्यैर्व्याख्यायते। न स्वमनीषया स्वतन्त्र- तर्कावष्टम्भेनोत्प्रेक्ष्य प्रतिपाद्यते इति द्योतनार्थम्। न शिष्ट- गर्हितात्मप्रशंसार्थम् ॥१॥

चोदनायामेव कर्तव्याकर्तव्यविकल्पः सम्भवति न पदार्थधर्मेषु। तत्र कर्तव्याऽकर्तव्यतया धर्माधर्मौ व्यवस्थापयन् तन्त्रप्रयोजनमाह :—

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥२॥**

यत इति सार्वविभक्तिकः शब्दः। अभ्युदयनिःश्रेयससिद्धौ

सर्वसाधनसंग्रहार्थः । तेन पदार्थज्ञानकुशलानुष्ठानयोः समुच्चयः । यत् किञ्चिज्ज्ञानं कर्म वाऽभ्युदयनिःश्रेयससिद्धौ साधकत्वेनोपादेयः स धर्मः । अर्थादेव यत् किञ्चित् कर्म ज्ञानं वाऽत्र बाधकं सोऽधर्मः । अत्र नञा पुरुषार्थसाधकत्वं प्रतिषिध्यते न धर्मः । अधर्मोऽपि तत्त्वतो धर्म एव किन्तु यत्र बाधकः तत्राधर्मो यत्र साधकस्तत्र तु धर्म एव । अन्ये केवलमोक्षधर्मा अन्ये चाभ्युदयिका धर्माः । मुमुक्षूणां हिंसादयोऽधर्मा अभ्युदयिनां राज्ञां क्वचिद्धर्मा भवन्तीति व्यवस्थातो[1] धर्माधर्मप्रतिपत्तिरनुसंधेया न नित्या । तेन परमार्थतोऽभ्युदयनिःश्रेयससाधकानामुपादानं बाधकानां च परिवर्जनं धर्मः । बाधकानां सेवनं साधकानां च त्यागोऽधर्म इति स्थितिः ।

वस्तुतस्त्वात्मन्यपि परमात्मवत्स्वभावसिद्धा एते धर्मादयो भावा विद्यन्ते न शास्त्रचोदिता भवन्ति । शुद्धा ह्येते धर्मादयो भावाः, किन्तु रजस्तमोभ्यामभिभवादशुद्धाः ।

इयमशुद्धिरेव पापमुक्तम् । तच्छोधकमनुष्ठानं पुण्यम् । तस्माद् धर्मानुष्ठानं पावनमाहुः । तेन निमित्तमात्रं खलु चोदना पापापनयने भवति न प्रयोजिका धर्मादीनाम् । नहि स्वाभाविकं वस्तु निमित्तमुपादत्ते ।

अभ्युदयसाधकमनुष्ठानं धर्मः । कश्चाभ्युदय इति ? उक्तधर्मादिभावानामपर्याप्तानां पर्याप्तिः । तदर्थं धर्ममनुतिष्ठतोऽस्य पुरुषस्य क्रमेण सत्त्वशुद्धौ एषामाभिमुख्येन योत्तरोत्तराभिवृद्धिः सोऽभ्युदयः । बलादन्यायेनोपार्जितस्य क्षणिकैश्वर्यादेरुदयो

---

१. Cosuistry.

नस्त्यभ्युदयः, कालान्तरे तस्य निरयफलकत्वादिति ।

सन्ति त्वत्र कर्माणि यैरनुष्ठितैरैश्वर्यस्योत्कर्षो भवति धर्मादीनां चापकर्षः । दृश्यन्त ऐश्वर्यवन्तोऽपि राजानो धनिनश्च रागिणो मूढा अधर्मपरायणाश्च । यत्रैकस्यैश्वर्यादेरुदयेऽन्येषामपकर्षो न सोऽभ्युदयः । यत्र चतुर्णामप्येषां समभिवृद्धिः स सर्वत उदयोऽभ्युदयः । तस्माद्धर्मादिभावनामन्योऽन्याविरोधेन यो निर्बाधोदयः सोऽभ्युदय इति फलितार्थः ।

शुद्धसत्वयोगादेते धर्मादयो भावा यत्र पुरुषे शुद्धस्वरूपेण विद्यन्ते स पुरुषविशेष ईश्वरः । स परमात्मा । ऐते धर्मा ईशन्य उच्यन्ते । स हीशनीनामीष्ट इति ईश्वर उक्तः ।

तत्र धर्मो नाम कारुण्यम्, पुरुषानुजिघृक्षया ईश्वरेण सृष्ट्यारम्भः । सर्वज्ञता ज्ञानं, स्वार्थाभावो वैराग्यम् । इच्छानभिघातः सर्वत्रेशीनीष्वप्रतिहतशक्तित्वमैश्व्यर्यम् । आसामीशनीनामीश्वरे निरतिशयाद् दोषाभावः । तदभावे च स्वार्थं प्रवृत्त्यभावस्ततश्च तन्निबन्धनैः **क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः** (यो. द. १,२४) इत्युक्तं शास्त्रे ।

तथा चायमात्मा । उभावीशनीशौ उक्तौ । किन्तु रजस्तमोभ्यामभिभूते सत्वे दोषयुक्ता अपर्याप्ताश्चास्यात्मन ईशन्यः । ततश्च स्वार्थाः खल्वस्य प्रवृत्तयः । तेन जन्ममृत्युदुःखान्ता धर्मा अविच्छेदेन प्रवर्तमाना अस्य संसारः प्रवर्तते ।

पुरुषार्थो ह्येष सृष्ट्यारम्भः । पुरुषार्थञ्च पदार्थधर्मज्ञानम् ।

एते धर्मादयोभावा पुरुषस्य शस्यतमाः संग्रहेण श्रेय इत्युच्यन्ते । एषामपर्याप्तानां पर्याप्तिः श्रेयस्संपादनम्, सोऽभ्युदयः । धर्ममनुतिष्ठन् यदाऽयमात्माऽस्य श्रेयसः परां काष्ठां विन्दति, यतः परं नान्यच्छ्रेयोऽत्रशिष्यते, यत्र हातमस्य हेयं, प्राप्तं च प्राप्तव्यं, तदायं कृतकृत्यः सर्वप्राणिहितसमर्थः, सर्वज्ञः आत्मनि स्थितः सर्वशक्तिमांश्चेश्वरसाम्यतां व्रजति, तत्पदं निःश्रेयसमाहुः । एवं चाभ्युदयपूर्वकनिःश्रेयससिद्धिः यतः संभवति स धर्मः ।

अभ्युदयनिःश्रेयससिद्धौ शास्त्रविहितं यत्कर्म तदेवात्र प्रकृतं न कृषिवाणिज्यराजसेवादि व्यावहारिकम् । नित्या स्वभावसिद्धा हि प्राणिनां तत्र प्रवृत्तिर्न चोदनाधीना तस्माच्छास्त्रविहितं कर्मैवात्र परीक्षणीयम् ।

उपलब्धिविषयत्वेन द्विविधमेव शास्त्रचोदितं कर्म विज्ञायते । यज्ञदानादि प्रत्यक्षोपलभ्यमानं कर्म दृष्टं भवति । अहिंसाद्यात्मगतं शास्त्रविहितं कर्मादृष्टमुच्यते दर्शनवर्जितत्वात् ।

तत्राहिंसासत्यास्तेयाद्यदृष्टकर्मणां तज्जातीयकमेवात्मनि धर्मोपजनरूपादृष्टं फलं भवति न भोगादिदृष्टफलमित्येषां साक्षान्निश्रेयससाधकत्वमुक्तम् । वक्ष्यति हि **धर्मविशेषप्रसूतात्तत्त्वज्ञानान्निश्रेयसमिति** । अयं मुनीनां सिद्धानां निवृत्तिमार्ग उच्यते।

यज्ञदानादिदृष्टकर्मणः फलं तु विनियोगाधीनं विकल्पते । यत्र भोगादि दृष्टफलाय प्रयुज्यते तत्र संकल्पितं भोगमात्रं फलम् । यत्र तु भोगाय न प्रयुज्यते निष्काममेव क्रियते तस्य तज्जातीयकं

दृष्टं फलं भोगस्तु भवत्येव किं तु धर्मादिभावानां विशुद्धया मोक्षसाधकधर्मविशेषप्रसवोऽपि निर्बाधं प्रवर्तते। तेन यत्र भोगापवर्गयोरन्योन्याविरोधेन संसिद्धिः स दिव्यस्वर्गविजयरूपोऽभ्युदय इति पर्यवसितोऽर्थः। अयमृषीणां प्रवृत्तिमार्ग उक्तः।

दृष्टकर्मणो दृष्टफलं स्त्रीपुत्रपशुधनादिभोगरूपम्। तस्य च फलस्य देशान्तरस्थितस्य कालान्तरे उपभोगो दृश्यते। आशुविनाशि हि कर्म दृष्टम्। न च निर्निमित्तः कर्तुः कर्मफलाभिसन्धिरुपपद्यते। तत्र यो हेतुस्तददृष्टमभ्युपगम्यते।

इयमत्र व्यवस्था, दृष्टस्य यज्ञादेः कर्मणो द्वय्येव गतिर्भवति। संस्काररूपेणात्मन्यवस्थितं कर्म धर्म उच्यते। अधिदैवे ग्रहनक्षत्रादिष्वपवर्गात् संस्काररूपेण निहितं कर्मादृष्टमुच्यते। एवं धर्मादृष्टयोः कर्तृसामान्यात्परस्परप्रीतेः[१] कर्तुः कर्मफलाभिसन्धिः। तददृष्टमेव भाग्यमाहुः। स ह्यस्य भागो विराडात्मनि निक्षिप्तः काले कर्तारं भोगरूपेण भजते। दिवि ग्रहादिष्ववस्थानाद्दैवमप्युच्यतेऽदृष्टम्।

बाह्यसाधननिरनुग्रहात्मनामहिंसाज्ञानवैराग्याद्यदृष्टधर्माणां बाह्यसंस्काराभावान्नास्त्यदृष्टोत्पादकत्वं, तेषां केवलात्मन्येव धर्मरूपेणावस्थानम्। तत्र पूर्वादृष्टस्य भोगेन क्षयादुत्तरादृष्टस्य चानुत्पादादस्य मुनेर्निष्क्रियस्य साक्षान्मोक्षसिद्धिरिति।

ऋषेः प्रवृत्तस्य तु धर्मसमृद्धिरपि भवति, अदृष्टमपि जन्यते। ततश्च स देवत्वमासाद्य महाभाग्याल्लोकलोकान्तरेषु ब्रह्मशासनेऽधिकृतोऽभ्युदयमनुभवन्नैन्द्रब्राह्मादिपदं प्राप्याप्तकामो मुच्यते। तदि-

१. Affinity.

दमभ्युदयपूर्वकं निश्रेयसमुक्तम् ।

ननु पुरुषस्य निदानतो मोक्षैकमात्रप्रयोजनं शरीरमभ्युदयस्यापि परिणामतस्तत्रैव पर्यवसानम् । स च मोक्षो वैराग्यसहायेन ज्ञानेनैवाधिगन्तुं शक्य इति किं बहुक्रियाकलापायाससाध्येनापार्थकेनाभ्युदयेन इति चेदुच्यते ।

न ह्यपूतात्मा कश्चिज्ज्ञानवैराग्यादिमोक्षसाधनेष्वाधिकृतो भवति । तत्राधिकारार्थमाभ्युदयिकानामनुष्ठानमपरिहार्यमेव । तानि हि पावनान्याहुः । पुनः परस्परसमभिव्याहारसंगृहीतोऽयं लोको राष्ट्रधर्मैर्ण सामान्यासामान्यभावैः समासक्तव्यवहारः । तस्यानपवर्जनीयत्वाद्व्यक्तयवच्छेदैनैकाकिनैः कस्यचित् स्वातन्त्र्येण जीवनयात्राऽपि न संभवेत्, किमुताभ्युदयनिश्रेयसी ।

धार्मिक एव समाजे धर्मानुष्ठानं संभवति । तत्तु पुनर्न संभवति शासनं विना । तत्पुनर्महाभाग्यवतां कर्म । नहि वैराग्यवता मुनिना ज्ञानशतैरपि शासनेन प्रजा धर्मे स्थापयितुं शक्याः निर्भाग्यत्वात् । तस्माद् ब्रह्मशासनं सर्वधर्ममूलमाहुः । कथमयं लोको धर्मे संगृह्येत यदि ब्रह्मशासनेऽधिकृताः साध्यादयो देवाः, आध्यात्मिकाधिदैविकाधिभौतिकादिजगद्भावानां नियन्तारो देवर्षिपितरो, रामकृष्णादय ईश्वरा मन्वादयश्च राजानो महाभाग्यवन्तो न स्युः ? स्मृतिस्तु स्फुटमेवाह—**कर्मणैव हि संसिद्धिमास्थिता जनकादयः** (गी. ३,२०) इति । योऽस्य जगतोऽध्यक्षः सोऽपि कर्मणैवेदं सर्वं धारयति तथा चोक्तम् :—

१. Socialism. २. Indivisualism.

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।**
**संकरस्य च कर्त्ता स्यामुपहन्यमिमाः प्रजाः** (गी. ३,२४) इति।

नहि ज्ञानं किञ्चिज्जन्यं प्राप्तव्यं वा वस्त्वस्ति। तत्त्वस्यात्मनः स्वभावसिद्धो धर्मो नित्योऽनन्तश्च केवलाविद्यानुविद्धत्वादावृतमज्ञानमुक्तं, सा चाविद्या कर्ममूला कर्मणैव विनश्यति। तस्मादाहुः—**कर्मणा बध्यते जन्तुः कर्मणैव विमुच्यत** इति। सा चाशुद्धिरूपा विद्या कर्मानुष्ठानान्नश्यति। अशुद्धिक्षये पुरुषस्य ज्ञानदीप्तिः स्वयमेव जायत आविवेकख्यातेः।

एवमभ्युदयपूर्वकं निःश्रेयसमभ्युदयानपेक्षं साक्षान्निश्रेयसं चेत्युभौ मार्गावस्मिँस्तन्त्रे परिगृहीतौ। स्वपरपक्षकल्पनया दुर्व्याख्यानैः शास्त्रं कदर्थीकृत्य दुराग्रहेण प्रवर्तनं तु स्वपक्षग्रहगृहीतानामेकान्तवादिनां कल्याचार्याणां शीलमेवेत्युपेक्षणीयं तत्त्वबुभुत्सुभिः॥२॥

**तद्वचनादाम्नायस्य प्रामाण्यम् ॥३॥**

धर्मप्रतिपादनाद्वेदस्य प्रामाण्यम्। अत्र तदिति धर्मः परामृश्यते न कश्चिदीश्वरादिवक्ता, आम्नायस्य वक्ष्यमाणापौरुषेयत्त्वादिति। को धर्मः? योऽयमत्र व्याख्येयत्वेनोपक्रम्यते स एव वेदेऽपि प्रतिपादित इत्यर्थः।

द्विधाप्रवृत्तं खल्विदं धर्मज्ञानं दर्शनेनागमेन च। दर्शनं तावत्प्रत्यक्षपूर्वकतर्कानुगृहीतानुमानादिप्रमाणेन साधर्म्यवैधर्म्याभ्यामर्थपरीक्षया तत्वनिगमनम्। अस्य स्थानद्वयम्। प्रत्यक्षादिप्रमाणं ज्ञानसाधनोपायो बुद्धीन्द्रियव्यापारविशेषः। तत्प्रमाणविज्ञानीयं **तर्कशास्त्रम्**। तेन तर्केण प्रमेयभूतानां पदार्थानां

यत्तत्त्वज्ञानं तत् **प्रमेयशास्त्रम्**। एतदुभयं **दर्शनम्** उक्तम् ।

प्रत्यक्षद्वैविध्याद्दर्शनं द्विभूमिकम्। बाह्येन्द्रियार्थसन्निकर्षाद्-बाह्यं प्रत्यक्षं, लौकिकप्रत्यक्षम्। तद्द्वारकत्वान्मणि[1]यन्त्रौ[2]षध्यादि-परिष्कृतं प्रत्यक्षमपि लौकिकमेव। तत्प्रत्यक्षपूर्वकानुमानजन्यं यावच्छक्यं ज्ञानं सा दर्शनस्य प्रथमा भूमिः ।

बाह्येन्द्रियालोकस्य परिमितत्वात् तदगोचराणां सूक्ष्मव्यवहित-विप्रकृष्टाद्यर्थानामग्राह्यत्वाद् विशेषप्रत्यक्षापेक्षस्य च तर्कस्याऽनव कल्पादेकदेशीयं परिमितं चेदं लौकिकं दर्शनै[3]म् ।

अन्तःकरणालोकस्य व्यापकतरत्वाद् बाह्येन्द्रियविरहेण यत्साक्षान्मनसाऽर्थानां ग्रहणं तन्मानसं प्रत्यक्षं यौगिकप्रत्यक्षमुक्तम्। तत्साधनोपायभूतं शास्त्रं योगशास्त्रम्। येषामर्थानां लौकिक-प्रत्यक्षं भवति तेषामेव यौगिकमपि प्रत्यक्षं संभवति। सौक्ष्माद्-व्यवधानाद्विप्रकर्षाद्वा येषामैन्द्रियिकं प्रत्यक्षं नावकल्पते तेषा-मेव यौगिकप्रत्यक्षेणोपलब्धिरुक्ता, नातीन्द्रियाणाम्। तेषां तु सर्वथाऽनुमानेनैव प्रतिपत्तिरिति द्रष्टव्यम्। तेनात्र परमाण्वादि-महत्तत्त्वान्तानां सूक्ष्मव्यवहितविप्रकृष्टानां साक्षात्कारो भवति। तत्र महत्तत्त्वसाक्षात्कारे योगिनः सत्वपुरुषान्यताख्यातिरूपविवेकजं ज्ञानमुत्पद्यते। तेनायं स्वप्रातिभया सर्वविषयमतीतानागत-वर्तमानं सर्वं पर्यायैः सर्वथा जानातीति सत्त्वपुरुषयोः शुद्धि-

१. Lense etc. २. Telescope and such other devices. ३. Empirio-dialectics.

साम्येऽत्र स्वरूपावस्थानात्कैवल्यं भवति पुरुषस्य। इयं दर्शनस्य द्वितीया भूमिर्दर्शनस्यावसानमुक्तम्।

वेदानपेक्षत्वाद् बुद्धिमात्रसाध्यत्वाच्चेदं बौद्धदर्शनमुक्तम्। अयमेव पुरुषार्थस्य दृष्टोपायः।

प्रत्यक्षमूलत्वादध्यवसायप्रतिष्ठानाद्देवर्ष्यार्यम्लेच्छादिसर्वजनसामान्यादिदंर्शनशास्त्रं महाशास्त्रमुक्तम्। अस्मिन्नये पदार्थानां साक्षाल्लक्षणैः परीक्षणमिति लक्षणशास्त्रमप्यभिधीयत इदं न्यायस्थानम्।

**अथ वेदावतारः**—दृष्टादृष्टभेदेनार्थद्वैविध्यमुक्तम्। तत्रादृष्टाः खलु तर्कमात्रसाध्याः। तर्कस्य पुनरप्रतिष्ठानादनवकल्पाद्बुद्धिदोषात्स्वपक्षदोषाच्च व्यभिचारापत्तेर्नैकान्तिकं प्रामाण्यं दर्शस्योपपद्यते। कर्तव्याकर्तव्यव्यवस्थाविकल्पबहुलायां चोदनायां तु नतरां संभवत्यनापेक्षप्रामाण्यं दर्शनस्य तर्कविप्लवात्। तत्र दर्शनोद्बलनार्थमदृष्टार्थस्य चावबोधनार्थं यदपेक्षितं स आगमो वेदः।

वेत्त्यनेन पूर्वोक्तचतुष्पाद्धर्ममितिज्ञानं वेदः। अपिच विन्दति प्राप्नोत्यनेनेष्टार्थमितिक्रियात्मकत्वाच्चोदना वेदः। स चालौकिकः शब्दद्वारकः उपदेशः।

अथ कोऽयं लोकविलक्षणः शब्दो वेद इति? शब्दस्य त्रयो धर्मा अविभक्ता अपि लोके विभागेन गृह्यमाणा दृश्यन्ते। श्रोत्रग्राह्यो गुणः श्रुत्यात्मकः शब्दः[१], अर्थख्यापनात्ख्यातिधर्मा ज्ञानम्[२]

१. Sound. २. Knowledge.

अपवर्गाच्च कर्मात्मेति चोदना[१]रूपः । सोऽयं त्रिधर्मा शब्दो वागित्यभिधीयते । यत्रैते त्रयोऽपि वाग्धर्मा अविभागेन प्रतिष्ठन्ते, यत्र खल्वनया वाचाऽर्थानां नाम्ना श्रवणं, ख्यात्याऽर्थानां दर्शनं, क्रिययाऽर्थानामारम्भणेनाविष्करणं च युगपत् संभवति, साऽपौरुषेयी गुह्या स्वयम्भूर्नित्याभ्यस्यमाना पश्यन्तीनाम वागाम्नाय उच्यते। चोदकत्वात्केवलौपदेशिकत्वाच्चास्या वाचो मन्त्रत्वं नित्यागमत्वञ्च षष्ठाध्याये वक्ष्यमाणम् ।

ऋषयः किल परमेण तपसैनां पश्यन्तीं वाचं शुश्रुवुरर्थांश्च ददृशुस्तद्धर्मांश्च याथातथ्येन विजिज्ञुः । सोऽयमृगादिलक्षणो मन्त्रराशिराम्नायो वेदः । निगम्यन्ते निश्चीयन्ते यत्रानेन दृष्टादृष्टार्था इति मन्त्रस्य निगम[२]त्वमुक्तं बौद्धज्ञानस्य दर्शनत्वादिति ।

ते चर्षयः परमकारुणिका अवरेभ्यो मन्त्रान्प्रादुः । निरुक्तादि-रहस्यसहितांश्च मन्त्रार्थांस्तेभ्यो व्याचख्युः । तदिदमाम्नायस्य ब्रह्मणो मन्त्रद्रष्टृभिः प्रवर्तितं व्याख्यानं ब्राह्मणमुच्यते । तेऽपि श्रुत्वेदं व्याख्यानं श्रुतिपरम्परया कण्ठरवेण धारयामासुस्तस्माच्छ्रुतिर्ब्राह्मणम् । आम्नायत्वं चास्य कण्ठरवेणाभ्यस्यमानत्वादुक्तं न मन्त्रवत्स्वयम्भ्वा-म्नानादिति द्रष्टव्यम् । मन्त्रार्थस्य साक्षाद्वेदनादस्य वेदत्वमिति मन्त्रब्राह्मणयोर्नामधेयं वेदः ।

**अथ स्मृतिशास्त्रावतारः**—यद्यपि सर्वथाऽनाविलमतिप्रमाणं चेदं वैदिकं ज्ञानं तथाप्यनेकशाखानामन्तर्हितत्वादुच्छिन्न-

---

१. Energy. २. Eshtablished fact.

त्वाच्च न कृत्स्नोऽपि वेद उपलब्धुं शक्यः। उपलब्धेऽपि न पुनस्तन्त्रानुरोधेन सर्वविद्यास्थानानां विभागशोऽनुशासनं विद्यते। बहुभक्तिवादीनि पुनर्ब्राह्मणानि। औपदेशिकं चैतद्वैदिकं ज्ञानम्। उपदेशोनाम परबोधसंक्रातये शब्दद्वारार्थस्य प्रतिपादनम्। न च विशेषेण कृतसंकेतो भवति शब्दः। तस्य व्याख्यानतो विशेषप्रतिपत्तिः। तच्च व्याख्यानं पुनर्नान्तरेण लक्षणशास्त्रं संभवतीतिवेदार्थप्रतिपत्तये पुनर्दर्शनापेक्षा। उक्तञ्च शिष्टैः—

**ऋषयोऽप्युपदेशस्य नान्तं जग्मुः पृथक्त्वशः।**
**लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः॥**

पूर्वेऽपि महर्षयः केवलोपदेशमात्रेण वेदार्थं तत्वतोऽप्रातिपद्यमाना इदं लक्षणशास्त्रमेवाश्रित्य वेदार्थावधारणे समर्था बभूवुः। ते महाश्रोत्रियाः पदार्थपरीक्षायै नानोपकरणपरिकल्पितमहाशाला[१] निर्माय तासु वैशेषिकेन विधिना[२] कार्यकारणपरीक्षाक्रमेणार्थां[३]स्तत्त्वतोऽधिजग्मुः। सूर्यचन्द्राग्न्यादीनां रूपं परीक्ष्य त्रीण्येव कारणरूपाणि प्रत्यपद्यन्त। पृथिव्याः कृष्णं, अपां श्वेतं रक्तञ्च तेजसां रूपमिति। एषां त्रयाणां सन्निकर्षमात्रमिदं रूपवैश्वरूप्यमिति विजिज्ञुः! तथा च श्रुतिः—**एतद्ध स्म वैतद्विद्वांस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदञ्चक्रुः** (छां ६,४,५) इति।

---

१. Laboratory. २. Analytieal method of investigation. ३. Inductively.

उभयोर्वेददर्शनयोः सामञ्जस्येन यत्रार्थावधारणं तत्स्मृतिशास्त्रम्। तदर्थं मनुकपिलयाज्ञवल्क्यादिभिर्जातिस्मरैः परमयोगिभिर्ध्यानबलेन पूर्वकल्पेष्वधीतानुष्ठितार्थान्वेदानञ्जसा संस्मृत्य तत्त्वतोऽवधार्य, विद्यास्थानैर्विभज्य, संक्षिप्य च दर्शनेन प्रतिसंधाय स्मृतिशास्त्रं कृतम्। एतद्वै स्मृतानां स्मृतित्वम्।

वेददर्शनयोरत्रसामार्थ्यादतिप्रमाणमिदं स्मृतिशास्त्रमाहुः— तथा च स्मृतिकृतां समयः—

**प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्।**
**त्रयं सुविदितं कार्यं धमशुद्धिमभीप्सता॥**
**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।**
**यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥**

(म. स्मृ. १२,१०५-१०६) इति।

तस्मात्स्मृतिबलेनैव वेदो व्याख्येयो न स्वातन्त्र्येण स्मृतिविरोधेन वा। न च संदिग्धार्थवेदबलेन स्मृतिर्व्याख्येयेति। वेदस्य दुर्बोधत्वात्तदर्थप्रतिपत्तये हि स्मृतिरपेक्षिता। यदि सुबोधोऽसंदिग्धश्च वेदः स्वार्थावबोधने निरपेक्षप्रमाणं संभवेत् तर्हि व्याख्यानस्य वैयर्थ्याद् वृथा स्मृतिशास्त्रं वृथैव च ब्राह्मणमापद्येत। यत्तु स्वार्थावबोधने मन्त्रस्यानपेक्षत्वमुक्तं तदृषेरेव न लौकिकानामित्यवान्तरविषयमिति ध्येयम्।

आप्ताः खलु ऋषयः स्मृतिप्रवर्तकाः साक्षात्कृतधर्माणः, आप्तकामाश्च। नहि तेषु कश्चित्स्वार्थः स्वपक्षाद्याभिनिवेशो वा संभावयितुं शक्यः। यद्येवंविधो दोषस्तेषु स्वीक्रियेत, कस्मान्न

मन्त्रद्रष्टृषु ब्राह्मणवक्तृषु च संभाव्येत। य एवार्थो दृष्टः श्रुतश्च स एवाविच्छिन्नपरंपरयाऽभ्यस्तो यथार्थतः संस्मृतश्च, तत्कथं स्मृतीनां वेदविरोधित्वं शंक्येत। तथा ह्येषां स्मृतिकृतां समयः —

**वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं न विद्यते।**
**सर्वं विनिःसृतं शास्त्रं वेदशास्त्रात्सनातनात्॥**
**दुर्बोधं तु भवेद्यस्मादध्येतुं नैव शक्यते।**
**तस्माद्दुधृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम्॥**

**(बृ. यो. या. स्मृ. १२,१-२)** इति।

यत्तु क्वचिच्छ्रुतिस्मृत्योर्विरोधे स्मृतिस्त्याज्येत्युक्तं तत्तु स्मृतिदुर्व्याख्यानपरं प्रक्षिप्तांशपरं वा बोध्यम्। नहि श्रुतिवत्स्मृतयः श्रुतपरंपरया कण्ठरवेण धार्यन्ते। ग्रन्थरूपेण स्थितास्वासु भेदप्रक्षेपादिपाठव्यभिचारस्तु दृश्यत एव। स्वपक्षदुराग्रहान्मतिमान्द्याच्चासां दुर्व्याख्यानं स्वयमेव स्फुटीभविष्यत्युपरिष्टात्। तस्माच्छ्रुतिस्मृत्योरातिप्रामाण्यमुक्तम्। हेतुवादमाश्रित्यानयोरवमानने दोषोप्युक्तः—

**योऽवमन्येत ते तूभे हेतुवादाश्रयो द्विजः।**
**स विद्वद्भिर्बहिष्कार्यो नास्तिको वेद निन्दकः॥**

**(बृ. यो. या. स्मृ. १२,२९)** इति।

तदिदं श्रुतिस्मृत्यात्मकं शास्त्रमागमशास्त्रमुक्तम्। तत्र वेदाविरोधिदर्शनमेव स्मृतिः। तत्रापि पदार्थधर्मप्रतिपादिका स्मृतिः सिद्धान्तशास्त्रम्। अनुष्ठानधर्मविषया च धर्मशास्त्र-

मुक्तम् । तस्य द्विविधस्यापि स्मृतिशास्त्रस्य विषयप्रयोजनाद्यनुबन्धविशेषान्नानाप्रतिष्ठानेषु विभक्तस्य तन्त्रविधिना प्रथनं विहितम् ।

इह तावत्सिद्धान्तशास्त्रेऽभ्युदयनिश्रेयससाधकस्यानुष्ठानधर्मस्य विशुद्ध्यर्थं पदार्थधर्मव्याख्यानमुपक्रान्तम् । ये पदार्थधर्मा वेदे प्रतिपादितास्त एवात्र व्याख्यायन्ते ।

**अथ वेदविद्याविभागः**—अनन्तोऽनन्तार्थश्च वेदस्तस्माच्छतपथमाहुः । तस्य मूलभूतस्याऽनुशासनार्थमृषिभिः स्मार्तेन वर्त्मना चतुर्दशविद्यास्थानैर्विभज्य व्याख्यानं कृतं तानि च—

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥**

(बृ. यो. या. १२,३) इति ।

ऋगादिचतुर्वेदविहिता आग्नेयी वायवी सौर्याङ्गिरसीति चतस्रो विद्याः । अथवा वेदा इत्यायुर्वेदो धनुर्वेदो गान्धर्ववेदः शिल्पादिस्थापत्यवेदश्चेति चत्वार उपवेदा उक्ता न ऋग्वेदादिचत्वारः । नहि शाखानां मूलेन सामानाधिकरण्यं युज्यते इति केचित् । अष्टादशैव विद्या इत्यपरे । शिक्षा कल्पो व्याकरणं निरुक्तं, छन्दो ज्योतिषमिति षड्वेदाङ्गानि प्रसिद्धानि । धर्मशास्त्रमिति चोदनालक्षणधर्मप्रतिपादिका मन्वाद्याचारस्मृतयः । तर्कानुगृहीतप्रत्यक्षानुमानाभ्यामर्थपरीक्षणेन तत्त्वावधारणं **न्यायः** । तेन तर्को वैशेषिकं, योगः, सांख्यश्चेत्येतद्दर्शनचतुष्टयं न्यायशब्द-

वाच्यं भवति। उपदेशस्य विवक्षितार्थावधारणार्थं श्रुतिलिङ्गवाक्यस्थानप्रकरणसमाख्योपपत्तितो यस्तर्कः सा **मीमांसेति** विवेकार्थं न्यायमीमांसयोः पृथग्ग्रहणम्। वस्तुधर्मोऽनुष्ठानधर्मश्चेति द्वैविध्यं धर्मस्योक्तम्। स पुनः प्रत्येकं दृष्टोऽदृष्टश्चोक्तः। तत्र दृष्टस्य न्यायतः प्रतिपत्तिः। अदृष्टस्य तूपदेशादेवेति पूर्वं पदार्थधर्मजिज्ञासायां श्रुत्यर्थावधारणाय पूर्वमीमांसादर्शनमुक्तम्। तदुत्तरं चोदनाजिज्ञासायां श्रुतिवचनमीमांसोत्तरमीमांसादर्शनम्। तदेतन्न्यायमीमांसेति स्थानद्वयात्मकं दर्शनषट्कं शिष्टैर्वेदोपाङ्गत्वेनापि परिगृहीतं विजयते।

इतिहासपुराणं पञ्चमो वेदः, इतिवृत्तसहितसंकीर्णसृष्टिविषयः। अत्र विराडात्मनः पुराणपुरुषस्येतिवृत्तसहितं दशभिः प्रतिष्ठानैर्विस्तरेण वर्णनम्। तानि च—

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः।**
**दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्॥**

(भा. २.१०,१-२) इति।

अव्याकृतचित्सत्सामरस्यात्मकब्रह्मणः सकाशान्महदादिक्रमेण भूरादिसप्तावरणसंयुतग्रहनक्षत्रतारादिविचित्रस्य विराट्पुरुषस्य सृष्टिक्रमः सर्गः। सच्चिद्ग्रन्थ्यात्मकपुरुषात्तेनैव क्रमेण दोषधातुदेहेन्द्रियात्मकस्य भूतात्मनो बीजाद्बीजसन्तानक्रमेण सर्गो विसर्गः। ब्रह्माण्डे भूरादिलोका ग्रहनक्षत्रतारादि-

गोलास्तत्र मर्त्यामर्त्यादिप्राणिसंस्थाश्च स्थानम् । सर्वभूताप्यायनमग्निषोमीयो लोकलोकान्तरप्रतिवर्त्तिव्यापरो यज्ञः पोषणम् ।

अवतेरूतिः । स च रक्षणगतिकान्त्याद्यनेकार्थो धातुः । तेनोतिरित्यस्मिन्ब्रह्माण्डे ज्ञानबलक्रियात्मकसर्वव्यापारसमूहे समाख्या । तथा च ग्रहनक्षत्रतारकादिगोलानां गतयः, तेषां स्वस्वकक्षासु रक्षणं, प्राणिनां धर्मादृष्टयोः प्रीतिः स्वस्वामिनोः संबन्धरूपकर्मफलसंवेदनम् । संयोगविभागसान्निकर्षसमभिव्याहाराणां प्रवृत्तयः, इत्यादिधात्वभिहिताः सर्वाः क्रिया ऊतिशब्दवाच्या उन्नेयाः ।

ब्रह्माण्डस्य लयस्थित्युत्पत्तीनां युगकल्पादिकालनियमो मन्वन्तरशब्दार्थः । महाबलशालिभिर्दैत्यैर्विप्लाविते ब्रह्मशासने भिन्नेषु धर्मसेतुषु प्रजालोके च पीडिते तद्वधाय धर्मसंस्थापनाय च महाभाग्यशालिनां रामकृष्णादीश्वराणां प्रादुर्भाव ईशानुकथा । निरोधोनाम भूताप्ययः पुरुषस्य मोक्षश्च । आश्रयोनाम जगतो मूलकारणं ब्रह्म प्रतिष्ठेत्येतेऽर्थाः पुराणे प्रतिपादिताः ।

**अथ दर्शनप्रामाण्यम्** — तत्राम्नायोपदिष्टार्थस्योपपादनार्थमिह दर्शनं प्रकृतम् । किं द्रष्टव्यमिति । **ब्रह्मविदाप्नोति परम्** (**तैत्ति.** २,१) इति ब्रह्मवेदितव्यम् । तस्मादेकमेव दर्शनं ब्रह्मदर्शनमिति । न्यायतो ब्रह्मसिद्धेरशक्यत्वात् तस्य केवलाम्नायप्रतिपाद्यत्वाच्च विशेषेणेदमभिधानं ब्रह्मदर्शनमिति ।

किं तद्ब्रह्मेति ? यतो बृहत्तरं किञ्चिदन्यन्नास्ति तद्ब्रह्म। किं तद् बृहत्तमं तत्वमित्याह श्रुतिः—**आदित्यो ब्रह्मेत्यादेशः** (**छां.** ३,१६,१) इति। यदिदं जगदादायान्ते आत्मसात्करोत्यात्मनि प्रविलापयति स आदित्यः। अन्यच्च—**यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्तीति** (तै. ३,१) तद् ब्रह्म। तेन **जन्माद्यस्य यतः** (ब्र.सू.१,१,२) तद् ब्रह्मेति, तज्जिज्ञास्यम्। **एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्** (मां ६) इति। स चेश्वरश्चिदात्मा[1]ऽव्यक्तशरीर[2] इति पुरुषविधः।

यथायं पुरुषो **यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्** एवमेवतत्सुषुप्तस्थानं **ब्रह्मैकीभूतं प्रज्ञानघनमेवानन्दमयमानन्दभुक्** तैजसं चेतो **मुखम्** अव्याकृतावस्थं भवति।

**तस्यैषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म** (तै.२,१,१) इति सच्चिदानन्दब्रह्मेत्यर्थः।

तत्र सदिति वस्त्वात्मकं मूर्ततत्त्वम्। तदेवैकमद्वितीयं ब्रह्म। तदव्यक्तं, तत्प्रधानं, सा प्रकृतिरस्य जगतः। चिदिति ज्ञानात्मकं ब्रह्म। तदिदं सच्चिदात्मकं ब्रह्म पुरुषविधम्। चिदस्यात्मा सच्छरीरम्। **आत्मैवेदमग्र आसीत्पुरुषविधः** (**बृह.** १,४,१) इति।

आप्नोतेरात्मा। स च सकर्मको धातुः। न चैकस्मिन् केवलनिःसदात्मके चिद्ब्रह्मणि सम्भवति कर्तृकर्मोभयाधीनाऽ-

---

१. The Soul. २. Body-Subotance.

प्नोतिक्रिया। तस्मादाऽप्नोतीत्यात्मा व्यापकः, आप्यत इत्यप्यात्मेति निर्वचनबलाद् व्याप्येऽपि आत्मशब्द इति समाख्यात एवात्मनि द्वैतोपपत्तिः, नहि समाख्या शक्तिर्होतुं शक्या। एवमेव पूरणात् पुरिशयनाद्वा पुरुष इत्यस्मिन्पक्षेऽपि धातोः सकर्मकत्वादात्मनि पूरयिता पूरयितव्यश्चेति व्याप्यव्यापकभेदाद्ब्रह्मणि द्वैतं प्राप्नोति।

किन्तु देशकालानवच्छेदादपरिमेयमित्यनन्तमुक्तं ब्रह्म। यावती चितो मात्रा तावदेव सत्। नास्त्यनयोर्व्यतिरेकः। गुणगुणिनोरिवानयोर्यः संबन्धः स रसः स आनन्दः। **रसो वा आनन्दः** इति श्रुतेः। स रसो वागभूदिति द्वैते सत्यप्यद्वैतमुक्तमात्मनि।

गुणगुणिनोः सम्बन्धे तूभयोरचेतनत्वाद् गुणस्य चाश्रयाधीनत्वाद्गुणिनः प्राधान्यात्कारणत्वमुक्तम्। अनयोस्तु विपरीतम्। ज्ञानात्मकत्वात्प्रवर्तकत्वान्नियामकत्वाच्चाभ्यर्हितस्य चितः परत्वमुक्तमवरत्वं च सतोऽचेतनस्य शरीरभूतस्य प्रवर्त्यत्वान्नियम्यत्वाच्चेत्युक्तं **सत्त्वाच्चावरस्य** (ब्र. सू. २,१,१६) इति।

अस्य सतः सन्ति योग्यतावच्छिन्नास्तिस्रः शक्तयो, ज्ञानशक्तिः क्रियाशक्तिरविद्याशक्तिरिति सत्वं रजस्तम इति त्रयो गुणाः। तत्र सत्वं नाम वृत्यात्मनां ज्ञानसंस्काराणां वहनसन्तानयोग्यताऽस्य शक्तिः, यथा जले तरङ्गवहनयोग्यता शक्तिः। प्रकाशो ज्ञानं तस्मात्प्रकाशशीलं सत्वम्। रजोऽस्य क्रियाधर्मवत्त्वमिति

क्रियाशीलं रजः। तमोनाम जाड्यं यथा हिमकरकाद्यवस्थे संहते कठिने जले तरङ्गप्रतिबन्धः। एषाऽस्य सतोऽविद्या शक्तिर्यतो ज्ञानक्रियाभाव इति। स्थितिशीलं तमः, यथा पुरुषस्य सुषुप्तिः। नेयमज्ञानशक्तिः, प्रबुद्धस्य पुनर्ज्ञानान्वयादिति ध्येयम्। एवं त्रिधर्मकामिदं ब्रह्मणः शरीरं सदुक्तम्। एवंविधञ्च चित्-सदानन्दात्मकं ब्रह्मोक्तम्।

यथाऽयं पुरुषो जागृतो व्यवहाराय प्रवर्तते। तथेदं शान्तं निष्क्रियं निरञ्जनं सुषुप्तावस्थं ब्रह्म जागृतमभूत्। तत एकोऽहं बहु स्यां प्रजाया इति जगद्रचनायैक्षत। तदादौ सत्वात्मनि प्रधाने ज्ञानमयमेव जगत्स्वरूपमचिन्तयदेवंविधमिति। तत्संकल्प-मयं जगदसद्ब्रह्मा[1]सीत्। यथा यन्त्रकार आदौ ज्ञानमयमेव यन्त्रं मनस्यवधारयति तद्वस्तुशून्यत्वादसदेव भवति तथा।

तत्र या अस्य जगद्विषया नाना ज्ञानवृत्तयः सत्वात्मनि प्रधाने व्यवर्तन्त, ते ऋषयो बभूवुः। अर्षणादृषिरुक्तोऽर्षणमिति ज्ञानक्रियोच्यते। ते च प्राधान्यतो बुद्धिर्मनः पञ्चेन्द्रियाणीति सप्त शुद्धज्ञानात्मानः। तज्ज्ञानमयं जगदसद्ब्रह्मासीत् स ऋषीणां लोकः। ज्ञानबलोभयक्रियात्मिका चित्सतोर्मध्ये संविदाना वाग्[2]ऋषीणामष्टम्यभूत्, इत्येतदसद्ब्रह्मैवाग्रेऽजायत। ततश्च तदनुविधमेव वाचां सृष्टिरभूत्। तच्छब्दब्रह्मैव त्रयीविद्या, स वाचां लोकः। तदनुविधमेव सतः सकाशादिदं सत्[3]यं जगदजायत।

---

१. Ideal univere. २. Voice. ३. Substantial universe.

तत्सद्ब्रह्मैव शबलब्रह्मासीत्, स सुकृतस्यलोकः ।

तस्य मीमांसा––**तदाहुः असद्वा इदमग्र आसीत्। ततो वै सदजायत तदात्मानं स्वयमकुरुत। तस्मात्सुकृतमुच्यते** (**तै.** २.७) इति। **किं तदसदासीदिति। ऋषयो वाव तेऽग्रेऽसदासीदिति। के ते ऋषयः। प्राणा वाव ऋषयः** ( **श. प.** ६,१,१,१) इति। अपि चाह–**प्राणा वाव ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदाना वागष्टमी ब्रह्मणा संवित्ते** (**बृ.** २,२,३) इति।

एषां प्राणानां पारिणामिकत्वप्रतिषेधोऽग्निविस्फुल्लिङ्गवन्निरनुक्रमा विवर्तमात्रा सृष्टिस्तु स्फुटमेवाम्नायते –**यथाग्नेर्ज्वलतो विस्फुल्लिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवा देवेभ्यो लोकाः** (**कौ.** ३, ३) इति।

ऋषयो वाव तेऽग्रेऽसदासीदिति ऋषीणां बहुत्वमाह श्रुतिः। तच्च बुहत्वं नोपपद्यतेऽव्याकृतावस्थे ब्रह्मणि। तस्मान्नाव्याकृतार्थोऽसच्छब्दः।

ज्ञानवृत्तय एवेह ऋषय उक्ताः। नहि वृत्तयोऽनाश्रितास्तिष्ठन्ति। न चैकस्यैव चिन्मात्रस्य स्वस्मिन्नाश्रयाश्रयिभावः सम्भवति, नापि नानात्वमुपपद्यते। तस्मादस्ति नानाज्ञानवृत्तीनामाश्रयस्ताञ्चितोऽन्यत्तत्सत्।

अन्ये सद्धर्मा अन्ये चासद्धर्मा दृश्यन्ते। नहि सदसद्भवितुमर्हति। न चासत्सत्। तथाहि ––

**असदकरणात्**—यन्त्रकारस्य मनसि स्थितं केवलज्ञानात्मकमसद्यन्त्रं न सत्कर्तुं शक्यम् ।

**उपादानग्रहणात्**—नहि काष्ठलोहादिबाह्योपकरणान्यनुपादाय वास्तविकं यन्त्रं रचितं भवति ।

**सर्वसंभवाभावात्**—ज्ञानात्मनि सर्वे भावाश्चिन्तयितुं शक्याः । नहि तत्र संभवासंभवनियमोऽस्ति । इह सदात्मनि तु नास्ति तादृशः सर्वभावसम्भवः । यदेव सम्भवति तदेव सुकृतं भवति नासम्भवम् ।

**शक्तस्य शक्यकरणात्**—अनर्षणं हि सज्जडत्वात्स्वयंप्रवृत्तिनिवृत्त्योरक्षमम् । चिदात्मा ह्यस्य प्रवर्तने निवर्तने च शक्तः । किन्तु यत्रास्य सतो योग्यता तदेव पूर्ववत् पुनः पुनः कर्तुं शक्यते चिता न कथञ्चिदन्यथा तथाह्याम्नातम् —

**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।**
**दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः** ॥ इति ।

**कार्यकारणभावाच्च** — ज्ञानात्मनि सर्वे संभवासंभवभावाः कार्यकारणानियोगं विनैव यदृच्छया विवर्तन्ते । सदात्मनि तु कार्यकारणनियमानुरोधेनैव भावा विपरिणमन्ते न यदृच्छया विवर्तन्ते ।

तथाहि च पूर्वे ब्रह्मवादिनः—कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इत्येताञ्जगद्धेतून्संदिहाना ध्यानबलेन-

चिदात्मानं देवमधिष्ठातारं तस्यात्मनः शरीरभूतां शक्तिं त्रिगुणात्मिकां सत्स्वरूपां च प्रकृतिं प्रत्यपद्यन्त। तेन सत्कार्यवादेन ब्रह्मणि सर्वधर्मोपपत्तिमधिजग्मुः। एतेन स्वप्नवद्विवर्तमात्रमिदं-जगन्मिथ्येतिमिथ्यावादश्च निरस्तो वेदितव्यः।

**ततो वै सदजायत (तैति. २, ७)** इति श्रुतौ वा पदेन निश्चयेनेदं जगदादौ ज्ञानमयं वस्तुशून्यमसद्रूपमजायत इत्यर्थः। तत्पश्चादेतन्मूर्तं सद्रूपं जगदजायत—व्याक्रियतेत्यर्थः। कथं कुतश्च? यथा यन्त्रकारो लोहकाष्ठादिसदुपकरणान्यादाय चिन्तितासद्रूपानुरूपं वास्तविकं सत्यं यन्त्रं रचयति। एवं तद्-ब्रह्म स्वमेवसदात्मानमुपादायासद्रूपानुविधमिदं सत्यं जगदकरोत्। तदेतद्व्याकृतनामरूपादिसत्यं जगत्सुकृतमुच्यते।

**नन्वसद्वा इदमग्र आसीत्ततो वै सदजायतेत्यत्रासत** एवोपादानात्सदजायतेति किं न स्याच्छ्रुत्यभिप्राय इत्यत आह—

**कुतस्तु खलु सौम्यैवंस्यात्। कथमसतः सज्जायेत।**
**सत्त्वेवसौम्येदमग्र आसीदेकमेवाद्वितीयम्** (छा. ६,२,२) इति।

तेनात्रासदिति ज्ञानात्मके जगति शब्दो नाऽभावे, न चिदात्मके ब्रह्मणि, नाप्यव्याकृते इषद्व्याकृते वा सद्ब्रह्मणीति-स्पष्टः श्रुत्यर्थोऽध्यवसीयते।

सच्छब्दस्य जडवाचित्वं तु स्वयमेव श्रुत्याऽन्यत्र व्यतिरेकेणोक्तं—**तस्मादेव सच्छब्दवाच्यं ब्रह्माविद्याशबलं भवतीति** (त्रि. ना. २) इति जडमेवात्राविद्याशबलमुक्तं भवति न चित्, तस्यमूढत्वानुपपत्तेः।

अथ चेतनमेव यदि सत्स्वीक्रियेत, तर्हि **यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति** (छा. ६,८,१) इति श्रुतिवचनान्मुच्यत एवेति । तत् किं शिरोमुण्डनदण्डधारण-भिक्षाचरणादिकुशलानुष्ठानेन ? स्वपिति जाग्रतीति प्रतिदिनं मुच्यते बध्यते चेति हास्यास्पदं मूढदर्शनम् !

ननु चिद्ब्रह्मैव व्याक्रियमाणं कार्यरूपेण परिणतं जडत्व-मापद्येत यथा परिमण्डलेभ्यः परमाणुभ्यो दीर्घत्रिकोणादिविलक्षण-परिमाणानि कार्याणि जायन्त इति । भ्रान्तं तन्मल्लाचार्याणां कुतर्क-मात्रम् । कारणगुणानां हि कार्ये सजातीयविशेषगुणारम्भकत्व-मुक्तं शास्त्रे न विरोध्यपूर्वगुणारम्भकत्वम्, दीर्घत्वादिकार्य-गुणास्तु परिमण्डलस्य कारणगुणस्य विशेषाः, परिमाणत्वसामान्यात्स-जातीया नाऽपूर्वा नापि विरोधिनः । जडत्वं तु चेतनाविरोधि न सजातीयमिति चेतनस्य जडत्वापात्तिनिदर्शनं कुदर्शनमेव ।

ननु सामरस्याच्चिदाचितोर्नोपपद्यते व्यतिरेकेणावस्थानम् । दृष्टं च काष्ठपाषाणादीनां व्यतिरेकेण जडत्वमिति चेन्न । उभया-त्मकेऽपि काष्ठापाषाणादाविन्द्रियप्रबन्धाभावान्नास्ति चेतनाया उप-लब्धिः । सेन्द्रियं हि द्रव्यं चेतनमुक्तमिति ।

अथार्था रूपादयो लोकपुरुषस्येन्द्रियाणि — **इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः** (का. १,३,१०) इत्यादिनिगमादिति चेन्न, तस्य विराजोऽविसर्गत्वविशेषान्महत्वाच्च पाषाणादिषु चेतनाया अनुपलब्धिः । चिद्रूत्त्वं तु न प्रतिषिद्धमिति ।

तदिदं सदसद्भेदेन द्विविधं जगद्रूपं ब्रह्मोक्तम्। तदाह—**द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेति** (बृ.२,३,१) तत्रेदं यदसद्ब्रह्म, तस्यामूर्तममृतं यत् त्यच्चेत्यादीनि नामधेयानि श्रुतिप्रसिद्धानि द्रष्टव्यानि।

तत्र सर्वेऽपि जगद्भावाश्चित्सकाशाद्युगपत्समन्ताद्विवर्तन्ते। यथाग्नेः सकाशाद्विस्फुलिङ्गा युगपदुत्तिष्ठन्ते। तथैव निरभिक्रमा विवर्तन्ते। नहि तत्र घटादिसत्पदार्थानामिव चूर्णमृदः पिण्डः, पिण्डात्कपालः तस्माच्चघट इत्येवंजातीयकः क्षणक्रमानुरोधी परिणामः प्रवर्तते। कारणकार्यक्रमानपेक्षमेव चिद्ब्रह्म विवर्तते। अयं विवर्तवाद उक्तः। यत्रेदमुक्तम्:—

**ज्ञानस्वरूपमेवाहुर्जगदेतद्विलक्षणम्।**
**अर्थस्वरूपमज्ञानात्पश्यन्त्यन्ये कुबुद्धयः॥**

**(जाबा. द. ६,४६)** इति।

तदनुरूपमिदं जगत्सत्सकाशात् परिणामक्रमेणाजयत। यावद्यथा चेदं तावत्तथा चासौ सङ्कल्पमयं जगदन्तर्गुहायां प्रतिष्ठितम्। तदाह—**यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः** (छां. ८,१,३) इत्यादि **यदेवेह तदमुत्र यदमुत्र तदन्विह** (का. २,४,१०) इति च। तत्राकाशः, सूर्याचन्द्रमसौ, द्यावापृथिवी, भूतं भव्यं भवच्च। तदेवासद्ब्रह्मान्तरिदं जगदनुप्रविष्टं यमयतीत्यन्तर्याम्युच्यते। तदेवान्तर्यामित्वेन प्रधानादितत्त्वान्याकाशादिभूतभौतिकानि देवतिर्यङ्मनुष्यादिनिखिलप्राणिजातमन्तस्तिष्ठ-

यथानियोगं व्यापारयति । तस्य **प्रशासने सूर्याचन्द्रमसौ द्यावापृथिवी निमेषमुहूर्तादिकालावयवाः** सर्वं चेदं यत्किञ्च नियमेन विधृतं तिष्ठति। तस्मात्सा नियतिः, तच्छास्त्रमस्य जगतो योनिरुक्ता, **शास्त्रयोनित्वात्** (ब्र. सू. १,१,३) इति ।

अयं श्रुत्युक्तो विद्याप्रपञ्चः संक्षेपेणोक्तः । स च नित्यानन्दचिद्विलासात्मको नित्यः प्रजापतिरुक्तः । एषाऽसत्सृष्टिर्मुख्या सृष्टिरुक्ता ।

**अथ सत्सृष्टिक्रमः**–उक्ताऽसत्सृष्टिः । सा च ज्ञानैकमात्रकारणाऽसंकीर्णाऽपरिणामिनी विवर्तमात्रा[1] सुबोधा च । न चैवंविधेयं सत्सृष्टिः । सा खलु नाना कारणमूला, प्रतिकारणं च नानापर्वा, प्रतिपर्व पुनरनेकस्थानप्रतिष्ठानादिभेदभिन्नाऽत्यन्तसंकीर्णा दुर्बोधा च । तस्या नास्ति केवलोपदेशाद्विशेषप्रतिपत्तिः । नहि विशेषेण कृतसंकेतो भवत्युपदेशः । सह्याभिमानिव्यपदेशबहुलो बहुभाक्तिवादी चेत्यतो मीमांसाया अनवकल्पादस्य न्यायेनानुसंधाय व्याख्यानं युज्यते । तस्मादाम्नायानुरोधेन स्मार्तमस्यानुशासनमुपक्रान्तम् ।

विपरिणममानस्य प्रधानस्यानेकक्षणाननुभवतो नानाविकाराणां नामधेयानि शास्त्रे श्रूयन्ते । तत्रैषां तत्त्वानां पौर्वापर्येण परस्परानुप्रविष्टानां ऋषिभिर्यथाप्रयोजनं विवक्षाविशेषात्क्वचित् क्रमेण, क्वचित् क्रमोल्लङ्घनेन, क्वचिच्च संकोचेन

---

१. Ideation.

संक्षिप्यानुशासनं कृतम् । तत्रैषां पौर्वापर्यं प्रसंख्यानं च युक्तिसंभवादनुबन्धानुरोधात्परिग्राह्यम् । **'न च नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा'** इत्यादिदुराग्रहेण श्रुतिस्मृतिषु विगानं विरोधो वा मन्तव्य इत्येष हि समयः शास्त्रकृतामिति सर्वथा स्मरणीयम् ।

उक्तः सत्त्वात्मनि प्रधाने विवर्तवादः[1] । यद्यपि रजोगुणादस्ति प्रधाने क्रियायोग्यता तथापि ज्ञानाज्ञानयोरत्यन्तवैधर्म्यान्नास्ति ज्ञानक्रियाया सदात्मनि जडे साक्षादपवर्गसामर्थ्यम्, स्वप्नज्ञानक्रियाया यथा शरीरे । ततश्चिज्जडयोरनुसंधापिका ज्ञानक्रियानुविद्धेच्छारूपाऽपरा क्रिया प्रावर्तत । सा वागभूत् । तथा च श्रुतिः— **सोऽयं पुरुषः प्रजापतिरकामयत, भूयान्स्यां प्रजायेयेति, सोऽश्राम्यत्स तपोऽतप्यत, स श्रांतस्तेपानो ब्रह्मैव प्रथममसृजत, त्रयीमेव विद्यां सैवास्मै प्रतिष्ठाऽभवत्** (श. ब्रा. ६,१,१,८) इति । यस्मात्सा वाक्क्रियोपसृज्य सदात्मनीदं नामरूपात्मकं जगदाविश्चकार तस्मात्स शब्द उच्यते ।

सा च चित्सदित्युभयात्मिका वाक् चित्सतोर्मध्ये संविदाना सेतुभूताऽष्टम ऋषिरुक्तः ।

यस्मात्सा वाक् तमसः परे पारे प्रावर्तत, तस्मात्परोच्यते । सा पुनश्चिन्नियोगाद्रजस्तमोऽवच्छिन्नं सत्प्रचोदयन्ती ज्ञानजगदनुरूपान् नानाभावान्नामरूपैर्व्याकुर्वन्त्येतन्मूर्तरूपेण परिणमयति

---

1. Idealism.

तस्मात्सा पश्यन्ती वागभूत्। अनयैव वाचाऽर्थानामारम्भणं, विकाराणां स्वरूपदर्शनं तेषां नामधेयानि च युगपत्प्रतिपद्यन्ते तस्मात्सा **पश्यन्ती** उक्ता। पुनर्व्याप्रियमाणेषु भूतेषु संयोग-विभागैर्मेघादिषूत्पद्यमाना **मध्यमा** नाम वागभूत्। यत्रानेन शब्दे-नायमर्थो ग्राह्य इति लौकिकसमयेनार्थसम्प्रत्ययो न चौत्पत्तिको यत्र शब्दार्थसम्बन्धः सा मनुष्यादिभिर्व्याहृता लोकव्यवहारहेतुभूता **वैखरी** वागुक्ता।

तत्र या परादितिस्रो वाचो, न ता वैखरीवत्समयेनार्थमिङ्ग-यन्तीत्यर्थगूहनाद् गुह्या उक्ताः। तथा च निगमः—**चत्वारि-वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेंगयन्ति तुरीयं वाचं मनुष्या वदन्ति** (ऋ. १,१६४,४५) इति।

अथास्यार्षं व्याख्यानं—ओंकारो महाव्याहृतयश्चेति चत्वारि वाक्पदानि। तत्रास्त्येवेत्यविशिष्टवृत्तिरोंकारः परा वाक्। भूरिति भवन्ति भूतानि यस्याः सा पश्यन्ती। भुवरिति भवति भूतेभ्यः संयोगविभागैरिति मध्यमा। स्वरिति स्वरणात्स्वस्वसमये-नार्थावबोधनाय व्याहृता मनुष्यादिभिर्भूतैः सा वैखरी।

तस्या वाचः सामान्याया विशेषाः कला[1]शब्देनाभिधीयन्ते। ते चाकारादिवर्णाश्चतुःषष्टिवाक्कला भवन्ति। तेषां पुनः सामान्यानां मध्यात्कतिपयवर्णानामसत्सृष्टिकलाप्रतिरूपाणामानु-

१. The Quantum—a unit of Energy.

पूर्वीविशेषात्समाहारः शब्दः। स च शब्दोऽसदर्थानुरूपमिह सदर्थमारभते। आरब्धस्य च पुनर्विकारं प्रज्ञापयति नामधेयं च भवति। एवं कतिपयशब्दानां **नियतवाचो युक्तयो नियतानुपूर्व्या मन्त्रा** भवन्ति, सोऽयं स्वयम्भूमन्त्रराशिराम्नाय इत्युक्तः। एवमसद्ब्रह्मानुविधानाच्छब्दब्रह्मप्रवृत्तिस्तदनुविधानाच्च सत्सृष्टिरभूत्।

अन्या ज्ञानशक्तिरन्याचेच्छाशक्तिरन्यैव च क्रियाशक्तिः। तत्र ज्ञानेच्छाक्रिययोरेकं नामधेयमीक्षा। ईक्षतेर्ज्ञानार्थस्येषणार्थत्वमपीति **स ऐक्षत, स ऐच्छदि**तिपर्यायेण प्रयोगाम्नानाल्लभ्यते। सैवेक्षा वाक्। स शब्दः। वक्ष्यति च **बुद्धिपूर्वा वाक् प्रकृतिर्वेदे** (६,१,१) इति। तस्मादेवोक्तमन्यत्र—**ईक्षतेर्नाशब्दम्** (ब्र. सू. १,१,५) एतत्सज्जगदिति तत्र सूत्रशेषः।

सेयं चित्पूर्वा वाक् ज्ञानबलक्रियात्मना प्रवर्तमाना चोदनेत्यभिधीयते। सैव भूतेषु रूपरसादिगुणाः। आकाशे शब्दः। मनसि परमाणुषु चोत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि, संयोगविभागौ, आत्मनीक्षा चेति नानारूपैर्व्याप्रियमाणा पुरुषस्याभ्युदयनिःश्रेयसार्था नियतिरुच्यते। तदधीनाश्चास्य पुरुषस्यसुखदुःखे इच्छाद्वेषप्रयत्नाः सर्वे च कामाः प्रवर्तन्ते। नैनां नियतिं कश्चिल्लङ्घितुं प्रभवति।

एतदाम्नायस्य शब्दब्रह्मणः स्वरूपमुक्तम्। एतेन स्वयम्भूवेदविषयाः कर्तृदेशकालनिबन्धनाः सर्वा मूढकल्पना निरस्तावेदि-

तव्यास्तस्यापौरुषेयत्वं चोक्तं वेदितव्यमिति ।

ततश्चिदनुविद्धाच्छब्दब्रह्मणः सदात्मन्यव्यक्ते परिणामः प्रावर्तत । तथा च श्रुतिः—**सोऽपोऽसृजत, वाच एव लोकाद्वागेवास्य सोऽसृज्यत, सेदं सर्वमाप्नोद्यदिदं किञ्च, यदाप्नोत्तस्मादापः (श. ब्रा. ६, १, १, ६)** इति । आप इति सन्नामस्वाम्नातम् । तेन सतो महान् महतोऽहंकारस्तस्मादाकाशो वायुस्तेज आपः पृथिवीत्येता समनस्का अष्टौ प्रकृतयोऽसृज्यन्त, ताः सर्वा आप एवोक्ता भवन्ति ।

एवमेता अपः सृष्ट्वा, '**सोऽकामयत, आभ्योऽद्भ्योऽधिप्रजायेयेति, सोऽनया त्रय्या विद्यया सहापः प्राविशत्तत आण्डं समवर्तत (श. ब्रा. ६,१,१,१०)** इति । अण्डानां[1] समूह आण्डं अथवाऽण्डमेवाण्डमिति । महदादिसामान्यप्रकृतिकानेकब्रह्माण्डसमूहात्मिकाऽण्डसृष्टिः शबलब्रह्मोच्यते । शब्दशबलब्रह्मणोरेकं नामधेयं महद्ब्रह्मेति सर्वमूर्तिकारणं स्मर्यते—

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ॥**
**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥**

(गी. १४,३-४) इति

**अथ ब्रह्मणस्तृतीयं रूपं**—योऽयं प्रत्यगात्मतया गृह्य-

१. Cosmos.

माणोऽहमितिशब्दवाच्योऽस्मिञ्छरीरे विद्यते तच्छारीरं ब्रह्मोक्तम्। प्रत्यक्षालिङ्गाच्छरीरादनुमितसद्भावः साङ्ख्ययोगादिस्मार्तविधिनाधिगम्यत्वाच्चायं स्मार्तः पुरुष उक्तः। यत्तु पूर्वोक्तं ब्रह्म तस्य प्रत्यक्षलिङ्गाभावात्स्मृतेरविषयत्वात्स औपनिषदः पुरुष उक्त इत्यनयोर्विशेषः।

अत्र कैश्चित्कल्याचार्यैः अपार्थीकृतश्रुतिबलेन काश्चिद्विप्रतिपत्तय उपस्थाप्यन्ते। तत्समाधेयम्। तदाहुस्ते—**न सांख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यत** इति। भ्रान्तं तद्धौर्त्यमात्रं वा। योगगम्यत्वं त्वस्य **नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तत्कारणं सांख्ययोगाभिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः** (श्वे. ६,१३) इति विस्पष्टमेव श्रुतिवचनात्।

ननु वैदिकमेव तत्र ज्ञानं ध्यानं च साङ्ख्ययोगशब्दाभ्यामभिलप्तं स्यादिति चेद्, वाढं, 'मुखमस्तीति वक्तव्यं शतहस्ता हरीतकीति' प्रतिपदं स्वमनीषया प्रकृतार्थपरिवर्तनछलेन चरतां स्वपक्षग्रहगृहीतानां किन्नु स्याद्दुर्घटम्!

यदुच्यते—**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय** (श्वे. ३,८)। इतीयं श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयतीत्यत्राप्येषां शब्दशुण्डीराणां समानश्चर्चः। श्रुतिस्तु महान्तमात्मानमाविदित्वा ब्रह्मात्मैक्यरूपामृतत्वप्राप्ति

वारयति न साङ्ख्यज्ञानेन योगमार्गेण वा पुरुषस्य स्वरूपावस्थानरूपनिःश्रेयसं वारयति। योऽयं बुद्धेः परो महानात्मा श्रुतिषु गीयते तस्य स्वरूपावस्थानमात्मवेदनमुक्तं, तन्निश्रेयसं स मोक्षस्तदेव च कैवल्यमुक्तम्। ततः परं ब्रह्मात्मैक्यरूपममृतपदं श्रुत्या पृथगभिहितम्। तेनान्यदेवात्मज्ञानं, ततः परमन्यदेव च ब्रह्मात्मैक्यमिति।

अयमत्र सर्वश्रुतिसामान्योऽभिप्रायः। सत्वपुरुषयोः संयोगरूपग्रन्थिविच्छेदो मोक्षस्तदेव निःश्रेयसमुक्तम्। तदायं पुरुषः शुद्धस्वरूपः स्वरूपावस्थितः ब्रह्माणि करक इव समुद्र एकाकी तिष्ठति तदस्य कैवल्यपदमुक्तम्। बन्धाभावान्नास्त्यस्य पुनः संसरणं तथाह्याम्नातम्—

**यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधातम्।**
**तद्वदात्मतत्त्वं प्रसमीक्ष्य देही एक कृतार्थो भवते वीतशोकः॥**
(श्वे. २,१४) इति।

योगादिति तु प्रकरणादेवानुवर्तते। तथाप्ययं कारणशरीरेणाव्यक्तेनावृतो विविक्तस्तिष्ठति। ततश्च स्वयमेवात्मना ब्रह्मतत्त्वं प्रपश्यति। तेनास्य चिदंशः प्रधाने चिद्ब्रह्माणि लीयते, कारणशरीरस्य सदंशस्याव्यक्ते प्रधानात्मनि लयस्त्वपरिहार्य एवानवस्थानाद्गत्यन्तराभावाच्च। स कारणशरीरवियोगोऽस्य मरणमुक्तम्। एवं सर्वपाशविमोक्षादस्यामृतत्वप्राप्तिर्भवति। **अविद्यया मृत्युं तीर्त्वा-विद्ययाऽमृतमश्नुते** (ईश० ११) इति मोक्षामृतत्वयोर्भेदस्तु श्रुति-

वचनान्निर्विवाद एवेत्यनुसन्धेयम् ।

वैदिकज्ञाननिरपेक्षेण साङ्ख्ययोगमार्गेण मोक्षामृतत्वयोरुभयोः प्राप्तिस्तु श्रुत्या स्फुटमभिहिता—

**यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः** (श्वे. २. १५) इति । नह्यत्र श्रुतिषु वैदिकज्ञानापेक्षावश्यकीति क्वचिदभिहितम् । प्रत्युत योगनिरपेक्षेण केवलवैदिकज्ञानमात्रेण तत्त्वज्ञानप्राप्तिं श्रुतिरन्यत्र वारयति । पूर्वे ब्रह्मवादिनः सत्स्वपि वेदेषु परं तत्त्वमलभमानास्तदर्थं योगमेवाश्रितवन्तः । किं कारणं ब्रह्मेत्युपक्रम्य तदाम्नातं—**ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः** ( श्वे. १,१-३) इति । तस्माद्वेदनिरपेक्षेणापि योगमार्गेण श्रुतिप्रमाणान्मोक्षसिद्धिर्भवत्येवेति स्थितिः ।

अपि च स्त्रीशूद्रादिनां वेदेष्वधिकारो नास्ति । तेऽपि मुमुक्षवो दृश्यन्ते । तेषां का गतिरित्याह व्यासो भारते योगधर्मे—

**अपि वर्णावकृष्टस्तु नारी वा धर्मकांक्षिणी ।**
**तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥**

अन्यदपि पुराणादौ श्रूयते—

**जैगीषव्यो यथा विप्रो यथा चैवासितादयः ।**
**क्षत्रिया जनकाद्यास्तु तुलाधारादयो विशः ॥**

धर्मव्याधादयः सप्त शूद्राः पैलवकादयः ।
मैत्रैयी सुलभा शार्ङ्गी शाण्डिली च तपस्विनी ॥
एते चान्ये च बहवो नीचयोनिगता अपि ।
ज्ञाननिष्ठां परां प्राप्ताः पूर्वाभ्यस्तस्वयोगतः ॥

इत्यादि वेदानधिकृतानामपि योगेऽधिकारस्ततश्च मोक्षः श्रूयते ।

वस्तुतस्तु यथा पूर्वैर्महर्षिभिर्ध्यानबलेन दृष्टो वेदोऽवरेभ्य उपदिष्टः, तथैव पूर्वपूर्वतरैः सिद्धैर्ध्यानबलेन दृष्टो योगमार्गः स्वातन्त्र्येणावरेभ्य उपदिष्टः । तथापि वेदार्थस्य न्यायेनानुसंधानादभ्यर्हिततमोऽयं योगमार्गः आख्यायते । तथाहि—

जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ।
योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥
(भा. ११,१५,३४) इति ।

ननु वेदनिरपेक्षेणैव स्मार्तविधिना मोक्षसिद्धेः, किं प्रयोजनं वैदिकेन ब्रह्मज्ञानेनेति चेदुच्यते—अल्पायासेन शीघ्रमेव च मोक्षसिद्ध्यर्थमभ्युदयार्थं च वैदिकब्रह्मज्ञानमपेक्षितम् । **आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः** (बृह. २,४,५) इति श्रुतेः ।

चित्तवृत्तिनिरोधसामान्यादेकोऽपि सन्योगोऽयमालम्बभेदाद्बहुधा भिद्यते । यत्र त्वयमात्मालम्बनीक्रियते तत्रासन्नतरा भवति मोक्षसिद्धिरिति तदर्थमयमात्मा स्वरूपतो ज्ञातव्यः । अस्यालम्बनीयस्वरूपज्ञानं न सम्भवति स्मृतितः । शरीरवानयमिति

सामान्यज्ञानादयं शारीरक उक्तः। किन्तु किंस्वरूप इति विशेषज्ञानस्य दर्शनेनासंभवाद्वेदैकमात्रगम्यः स इत्याह श्रुतिः—**नावेदविन्मनुते महान्तम्** (तै. ब्रा. ३,१२, ६, ७) इति।

ईश्वरप्रणिधानेन तु सर्वान्तरायाभावात्ततोऽप्यासन्नतरो निर्बाधश्च भवति मोक्षः। प्रणिधानादावर्जित ईश्वरो योगिन मनुगृह्णात्यभिध्यानमात्रेणेति। तत्र स्मृतिः—

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥**
(गी. ७, ४७) इति।

तस्यापि ध्येयस्वरूपज्ञानं शास्त्रगम्यमेव, न दर्शनविषय इति वैदिकज्ञानापेक्षा।

वेदानपेक्षसिद्धमार्गे त्वन्य एवालम्बक्रमः। तत्र हि भूतेन्द्रियाणां स्थूलस्वरूपादिरूपाणि साक्षात्कृत्य तज्जयादणिमाद्यैश्वर्यप्राप्तिपूर्वकं नेति नेतीतिव्यतिरेकेण विवेकजमात्मज्ञानं प्रादुर्भवतीति नायमात्मेश्वरो वाऽलम्बनीक्रियते। तस्मादेषां शास्त्रीयमात्मज्ञानमीश्वरस्वरूपज्ञानं वा नापेक्षितम्।

अभ्युदयनिःश्रेयसार्थिना तावत्प्राधान्यतोऽधिदैवः पुरुष आराध्यः तस्यान्तर्यामित्वात्तदधीना ह्यस्य पुरुषस्य प्रवृत्तयः। यथाय मात्माऽस्मिँश्छरीरे तथैवामुष्य विराट्शरीरस्याधिदैवपुरुषस्य सूर्यमण्डलान्तर्वर्त्यसावादित्य आत्मा। अनयोः समभिव्याहारमाह श्रुतिः—**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं**

चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च, अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः (छां. ८, ६, २) इति । एवमेते पुरुषा अमुमधिलोकमुपासमाना आसते । तं यथा यथोपासते तदेव भवति तद्धनान्भूत्वाऽवति तस्मादेतमेवंवित्सर्वैरेवैतैरुपासीत सर्वं हैतद्भवति सर्वं हैनमेतद्भूत्वावति (श प. १०,५,३,२०) इति श्रुतेः ।

तस्याप्यत्यन्तसङ्कीर्णत्वाच्छारीरकवद्वेदादेव प्रतिपत्तिः । स पुनरुपदेशो निर्बलतमं प्रमाणेषु न दृढां बुद्धिमुत्पादयति । आप्तोपदेशात्प्रतिपद्यमानोऽपि लोके विद्वाँल्लिङ्गदर्शनेन बुभुत्सते । अनुमितमप्यर्थं प्रत्यक्षतो दिदृक्षते । प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तते, सत्या बुद्धिरुत्पद्यते । केवलौपदेशिकं च लोकपुरुषज्ञानमुक्तं नह्यस्य पुरुषत्वे प्रत्यक्षं लिङ्गमस्ति । न च दृष्टं विनाऽदृष्टसिद्धिर्भवति ।

प्रत्यक्षश्चायं स्मार्तः पुरुषो लिङ्गैरनुमितानेकभावात्मा चेत्यस्य पुरुषत्वे भवत्येव सत्याबुद्धिः । अस्य साम्यात्सामान्यतो दृष्टे लोकपुरुषे सत्याबुद्धिरुत्पत्स्यत इत्यनयोः पुरुषयोरितरेतरनिदर्शनार्थं शास्त्र उपदेशो विधीयते ।

अपरिसंख्येयाः खलु लोकपुरुषेऽवयवा अध्यात्माधिदैवाधिभौतिकाश्चभावाः शास्त्र उपदिष्टाः । पुरुषश्चायं लोकसम्मित उक्तः । यावन्तो लोके भावास्तावन्तः पुरुषे यावन्तः पुरुषे

तावन्तो लोके इति ह्युपदेशः । तथा चास्मिन्नध्यात्मपुरुषे प्रत्यक्तयाऽह श्रुतिः—

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥

(कठ. ६,७) इति

अथामुमधिदैवमाहात्म्यात्प्राक्तया—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥

(कठ. ३,१०)

इति पिण्डब्रह्माण्डयोरैक्यं स्फुटमेव श्रुत्याभिहितं विद्यते ।

एवमनयोरध्यात्माधिदैवपुरुषयोः प्रधानभावानां साम्यमाम्नातं, तद्विशेषाणामपि यत्र तत्र साम्यमुपदिष्टम् । अस्य पुरुषस्य बद्धस्यात्मज्ञानान्मुक्तिस्ततश्चामृतत्वमुपदिष्टम् । लोकपुरुषस्य तावन्नित्यमुक्तस्य लीलोपात्तविग्रहस्य नोपपद्यते तादृग्विधो मोक्षनिर्देशः । एतावाननयोर्भेदः उक्तस्तद्विशेषाच्च तद्विशेषा अनुसंधेयाः ।

तत्र महदल्पव्यवस्थया येषां भावानामतिस्थौल्याददतिविप्र-

कर्षाद्वा लोक उपलब्धिर्न सम्भवति तेषां सामीप्याद् गोचरत्वाच्चास्मिन्पुरुष उपलब्धिः। येषां पुनरतिसौक्ष्म्यादतिसामीप्याद्वाऽस्मिन्पुरुष उपलब्धिर्न सम्भवति तेषां लोकपुरुषादुपलब्धिरित्येवमितरेतरनिदर्शनेन प्रत्यक्षानुमानाभ्यामुभयोर्विशेषप्रतिपत्तौ सर्वलोकमात्मन्यात्मानं च सर्वलोके समनुपश्यतः सत्या बुद्धिरुत्पद्यते। बुद्धिविशेषप्रसूतात्तत्त्वज्ञानाच्च निःश्रेयससिद्धिरपि भवतीत्यप्यनयोः साम्यज्ञानस्य फलमुक्तम्।

अभ्युदयार्थमप्यनयोः साम्यज्ञानमावश्यकमुक्तम्। नैतत्साम्यज्ञानं विना कश्चिदधीतवेदोऽपि मन्त्रार्थाननुसन्धातुमर्हति। न चानर्थविन्मंत्रफलभाग्भविष्यतीत्यत्रेमौ निगमा उधृतौ यास्कीये—

**स्थाणुरयं भारहारः किलाभूदधीत्य—**
**वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते**
**नाकमेति ज्ञानविधूतपाप्मा॥**
**यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्केधो न तज्ज्वलति कर्हिचिद्** ॥ इति।

अपि च योऽनयोः साम्यं विद्वान् यजति— **स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत, इदं मेऽनेनाङ्गमुपधीयत इति। स यथाऽहिस्त्वचो निर्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते, स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसंभवति** (श. ब्रा. ११,२,६,१३)

इति। अथ योऽनयोः साम्यं न वेद तस्याह श्रुतिः—**अथ ह स देवयाजी यो वेद देवानेवाहमिदं यजे, देवान्सपर्यामीति, स यथा श्रेयसे पापीयान्बलिं हरेद्वैश्यो वा राज्ञे बलिं हरेदेवं सः, स ह न तावन्तं लोकं जयति यावन्तमितरः** (श. ब्रा. ११,२,६, १४) इत्यन्तवत्तस्य सुकृतमुक्तम्। तदेतद्ब्रह्मात्मैक्यवेदनमभ्युदयनिःश्रेयससाधनमुक्तम्। तथा च पिण्डब्रह्माण्डैक्यज्ञानमेव वेदवादिनां विदुषां ब्रह्मात्मैक्यवेदनमाहुः। ज्ञानपक्षे ब्रह्मात्मैक्यज्ञानंतूक्तं पुरस्तात्। एतेन नान्यदस्तीत्येकान्तवादो निरस्तः।

**अथ दर्शनभूमिकाविभाग उच्यते**—यद्यप्येकमेवेदं स्मार्त्तदर्शनं ब्रह्मदर्शनमुक्तं, तथापि विषयप्रयोजनाधिकारिवैलक्षण्यानुरोधादस्य भूमिभिर्विभागो विहितः।

तत्र सच्चिदानन्दस्वरूपादादित्यब्रह्मणः सकाशादीक्षणात्प्रधान प्रवृत्तिपर्यन्तं यज्ज्ञानं तत्केवलौपदेशिकमुक्तम्। न ह्यत्र साक्षाद् दर्थानां लक्षणपरीक्षणं सम्भवत्यतीन्द्रियत्वादिति। इदं तावदाप्तेन विज्ञाय शब्दैरुपदिष्टस्यार्थस्य श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानुगृहीततर्केण वाक्यार्थावधारणं **मीमांसादर्शनम्**। केवलतर्कयोगादिदं दर्शनमात्रमुक्तम्। नेयं स्मृतिरदृष्टार्थविषयत्वादिति विशेषेण ब्रह्ममीमांसादर्शनमभिधीयत इत्येषा दर्शनस्य प्रथमा भूमिरुक्ता।

प्रवृत्तात्प्रधानात्प्रथमं पारिणामिकं तत्त्वं महत्तत्त्वमुक्तम्। तत्प्रतिसंवेदनात्पुरुषस्य तस्मिन्या ज्ञानवृत्तिः सा बोधात्मिकत्वाद्-

बुद्धिरुच्यते। एवं पुरुषो, महत्तत्त्वं, बुद्धिरिति त्रयोऽर्थाः सम्पन्ना भवन्ति। तत्रमहत्तत्त्वविशिष्टस्य पुरुषस्य नामधेयमात्मा स चात्माऽत्र गुणी बुद्धिरस्य गुणत्वेन व्यपदिश्यते। बुद्धिवृत्तिविशिष्टं महत्तत्त्वमविभागेन गृहीतं संख्याशब्देन व्यपदिश्यते।

महत्तत्त्वादविशेषादहङ्कारतत्त्वं विशेषः, अहङ्कारादविशेषा-दाकाशादिपञ्चभूततन्मात्राणि, मनःषष्ठानि पञ्चेन्द्रियाणि, पञ्च-कर्मेन्द्रियाणि, भूततन्मात्रेभ्योऽविशेषेभ्यः पञ्चभूतानीति विशेषा जायन्ते। तेन मनः, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चभूता-नीति षोडशतत्त्वान्यन्त्याविशेषा जायन्ते। अयं तत्त्वसर्ग[1] उच्यते। तत्राप्याकाशादिपञ्चभूतव्यतिरिक्तान्यष्टादश तत्त्वानि पुरुषस्य लिङ्गशरीरमुक्तम्। कस्मात्? लिङ्गनादिति। पुरुषेणानादि-सम्बन्धात्सहगच्छतीति। अपि चायं पुरुषः शुद्धोऽपि सन्ननेन शरीरेण चित्रीकृत इवेति लिङ्गम्। अयमेव दिव्यसर्ग उच्यते।

पञ्चतन्मात्रेभ्योऽविशेषेभ्यः पञ्चभूतानि येऽन्त्या विशेषा उक्तास्तेषां पुरुषेणानादिसम्बन्धाभावान्नास्ति दिव्यसर्गे समावेशः। तेभ्यः प्रवृत्त आधिभौतिकः सर्गोऽधिभूतमुच्यते। तदेतत्पौर्वापर्येण तत्त्वप्रसंख्यानं सविशेषमुक्तम्।

**अथास्य सर्गस्य तान्त्रिकमनुशासनम्**:— तत्र यदिदं बुद्धि वृत्तिविशिष्टं महत्तत्त्वं सा संख्योक्ता। संख्यामधिकृत्याकाशाद्यन्त्य-विशेषान्तं प्रमेयत्वेन विषयो यस्य तन्त्रस्य तत्सांख्यमुच्यत इत्यस्य

---

१. Metaphysical creation. २. Animated creation.

प्रमेयत्वापेक्षा समाख्या। अपि चात्र प्रत्यक्षानुमानविशिष्टवैशेषिकविधिविरहेण केवलप्रसङ्ख्यानेन साक्षात्कृत्य तत्त्वानि सङ्ख्यायन्त इति साङ्ख्यमित्यस्य प्रमाणत्वसम्बन्धात्समाख्या।

सा च सङ्ख्या पुरुषद्वैविध्याद्द्विविधा। अधिदैवे पुरुषे आधिदैविकी सङ्ख्या अध्यात्मपुरुषे चाध्यात्मिकीति साङ्ख्यस्यापि द्वैविध्यं प्राप्तम्। अधिपुरुषे बन्धाभावान्नास्ति शरीरानादित्वम्। अध्यात्मनि तु विशेषः। पुरुषस्य लिङ्गशरीरेणानादिसम्बन्धात्सङ्ख्यादीनामप्यनादित्वमित्यनयोर्विशेषादाधिदैविकं साङ्ख्यमेव योगमाहुः। न चानयोः कश्चित्तात्त्विको भेदोऽस्ति।

अभ्युदयपूर्वकनिःश्रेयसमार्गे वेदार्थप्रतिपत्त्यर्थं हिरण्यगर्भादिदेवतासम्बन्धात्तदधिष्ठितमहत्तत्त्वाद्यर्थानां ज्ञानमप्यत्रापेक्षितमित्यनुबन्धविशेषात्तत्त्वप्रसङ्ख्यानेऽप्यत्र विशेषः। तथा च योगे भूतेन्द्रिय तन्मात्राणां भूतेष्वेव सङ्कोचः। अहङ्कारस्य मनसश्च महत्तत्त्वेऽन्तर्भावाद्द्वयोश्चित्तमित्येका संज्ञा। तेनास्मिन् तन्त्रे चतुःपर्वा परिणामोऽभ्युपगम्यते। तदुक्तम् :— **विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि (यो.द. २,१९)** इति। तद्विशेषादन्येऽपि परिग्रहविशेषा वेदितव्याः।

योगस्य प्रवर्तकः साक्षाद्धिरण्यगर्भः। स च भगवान्सर्गादौ नानास्थानप्रतिष्ठानविशिष्टां कृत्स्नां योगसंहितां प्रोक्तवान्। ततश्च देशकालाधिकारिभेदादियं संहिता युगेयुगेऽवरैर्योगाचार्यैस्तन्त्रार्थान् सम्यग्विज्ञाय यथायोगं संक्षिप्य विस्तार्य वा तन्त्रिता।

तत्रेदानीमस्या योगसंहितायाः सूत्रस्थानं भगवता पतञ्जलिना संस्कृतं विद्यते ।

साङ्ख्यस्य प्रवर्तको भगवान्कपिल उक्तः—

**यमाहुरग्र्यं पुरुषं महान्तं,**
**पुरातनं साङ्ख्यनिबद्धदृष्टयः ॥**
**यस्यापि देवस्य गुणान्समग्राँ—**
**स्त्वाँश्चतुर्विंशतिमाहुरेके ॥**
(ह. वं. ३,८५,१५)

स च भगवान् सर्गादौ स्थानप्रतिष्ठानविशिष्टं कृत्स्नमेव-साङ्ख्यतन्त्रं प्रोवाच । तच्च युगे युगेऽधिकारिसत्त्वानुरोधादव-रैस्तन्त्राचार्यैर्यथायोगं संस्कृत्य प्रचारितम् । तदिदानीं साङ्ख्यचार्येणे-श्वरकृष्णेन कारिकारूपेण निबद्धं विद्यते ।

इदं तावत्कापिलं साङ्ख्यं शुद्धाध्यात्मिकमुक्तम् । अयं पुरुषोऽपि कपिल उक्तः । तमधिकृत्य प्रवृत्तमित्यप्यस्य कापि-लत्वं केचिदिच्छन्ति । स्मार्तैकमात्रविधिना केवलपुरुषविमोक्षार्थं प्रवृत्तमित्यनुबन्धविशेषादस्य योगाद्वैलक्षण्यं न विरोधः । अत्र महत्तत्त्वादितन्मात्रान्तसर्गस्य पुरुषेणानादिसम्बन्धात्तन्त्रकात्स्न्यार्थं योगादन्यथा तत्त्वप्रसङ्ख्यानं कृतम् ।

यावतार्थेन प्रयोजनसिद्धिस्तदेव तन्त्रस्य विषयो भवति न न्यून-मसाधकत्वात्, नाप्यधिकमानर्थक्यात् । अत्र यमादिसाधनपूर्वक-मभ्यासवैराग्याभ्यां तत्त्वज्ञानात्कैवल्यप्राप्तिरिष्टा । तथा ह्युपदेशः —

तत्कारणं साङ्ख्ययोगाधिगम्यं, ज्ञात्वा देवं मुच्यते सर्वपाशैः (श्वेता. ६,१३) इति। तस्मान्नास्त्यत्रमार्गे ईश्वरापेक्षा। तेनास्तीश्वरो न वेतिविवादस्यासाधकत्वान्नाभ्युपगम्यते नापिनिषिध्यत ईश्वरसद्भावः। अथ नायमीश्वरं मन्यते तस्मात् कुपित ईश्वरो वेदनिर्दिष्टयमादिसाधनमनुसरतोऽपिपुरुषस्य-मोक्षं वारयिष्यतीत्येवंविध ईश्वरो भवतु नाम केषाञ्चिद्वैदिकपाशानां वैदिकानां त्वद्धा नास्त्येवंविधः !

नाप्यस्मिन्नध्यात्मतन्त्रे ब्रह्मकारणवादोऽपेक्षितः प्रयोजनाभावात्। अनादिरयंपुरुषोऽनादि चास्य कारणशरीरं प्रधानम्। न चायमस्यशरीरं च क्वचिद् ब्रह्मणा निर्मितं श्रूयते। ईक्षणवशात्प्रवृत्ते प्रधाने पुरुषाणां स्वस्वकारणशरीरादव्यक्तादद्दृष्ट नियोगान्महदादिक्रमेण शरीरसर्गो नियत्या प्रवर्तते यथा सूर्योदये लोकोऽयं स्वत एव व्यवहाराय प्रवर्तते न साक्षात्सूर्यचोदित इत्येवं तत्।

न चैतावता साक्षादीश्वरकर्तृतोपपद्यते पुरुषतच्छरीरयोः। आण्डसृष्टौ ब्रह्मकारणतेतिचेद्भवतु नाम। तदविषयोऽस्य तन्त्रस्य।

अथेश्वरप्रवर्तितं प्रधानं पुरुषाणां शरीरप्रवर्तने कारणं तेनेश्वरस्य परतः कारणत्वमिति चेद्, बाढमेवमेवैतत्, पुरुषार्थंहीश्वरः प्रधानं प्रवर्तयति। युद्धे प्रवृत्तस्य खड्गेन प्रयोजनं भवति न खड्गकर्त्रा। नापि तेनान्यथासिद्धस्य खड्गनिर्मातुः खड्गं प्रति कर्तृत्वं निषिध्यते। नह्यस्मिन्कापिले तन्त्रे पुरुषार्थ-

निमित्ता प्रधानस्य प्रवृत्तिः क्वचिन्निषिध्यते । नाप्यत्राप्रवृत्तं जडं प्रधानं विषयीक्रियते । साम्यावस्थस्य प्रधानस्य ग्रहणं तु ब्रह्मदर्शनसम्बन्धार्थं न विषयत्वेनोपास्यत्वेन वा ।

अपि च प्रधानस्य चिद्विशिष्टत्वं न क्वचित्तन्त्रे निषिद्धं दृश्यते । प्रत्युत महत्तत्त्वादीनां परस्पराकूतहैतुकी ह्यत्र प्रवृत्ति-रुक्ता । न च जडस्याकूतं सम्भाव्यते । वत्सविवृद्धयर्थं क्षीरस्या-ज्ञस्य प्रवृत्तिरपि चेतनाया गोरेवोदाहृता । चेतननर्तकीव-त्प्रकृतिरत्रोक्ता । तथैव जडमप्यव्यक्तं चिद्योगात्पुरुषार्थं प्रवर्तते । तेन चिन्निमित्ता पुरुषनिमित्ता चेत्युभयनिमित्ता प्रधानस्य प्रवृत्तिर्भवति । तत्र पुरुषनिमित्ता याऽव्यक्तस्य प्रवृत्तिः सैवात्र विषयो न चिन्निमित्ता । तस्मात्प्रतिषेधमात्रमत्रेश्वरस्य न निषेध इति ।

उक्तोऽस्या अध्यात्मस्मृतेर्विषयः प्रयोजनं ब्रह्मतन्त्रेण च सम्बन्धः । वैदिकत्वं त्वस्य तन्त्रस्य स्मृतित्वादेव । वेदानपेक्षस्य केवलबौद्धागमस्य स्मृतित्वानिष्टत्वादिति ।

यत्तु बौद्धागमे कापिलं साङ्ख्यं स्मर्यते तत्कापिलसाङ्ख्यप्रति-रूपं वैदिककापिलसाङ्ख्याद्भिन्नमिति द्रष्टव्यम् । सन्ति चान्यान्यप्यवैदिकान्युपदर्शनानि स्मृतिच्छायारूपाणि, मयविष्णु-शुक्रबृहस्पत्यादिभिर्दैत्यमोहनार्थं प्रवर्तितानि, तेषां बौद्धागमे समावेशो द्रष्टव्यः । तथा हि स्मृतिराह बौद्धागमम् —

बौद्धः कापिलकुहुकौ लोकायतिकभिन्नकाः ।
वेदबाह्यास्तथान्ये तु तामसा अशिवास्तुते ॥
आसुरेयाः पाशुपता बृहस्पतिकृतास्तुये ।
शुक्ररूपं समास्थाय देवानां हितकाम्यया ॥
प्रजापतिकृताश्चान्ये असुराणां प्रमोहनाः ।
येनेदं वाङ्मयं दुग्धमधर्मैविफलीकृतम् ॥
(बृ. यो. या. १२,९-१२) इति ।

पूर्वस्यां योगभूमिकायामाकाशादिपञ्चभूतान्यन्त्या विशेषा[१] उक्ताः । तान्विशेषान्प्रमेयत्वेनाधिकृत्य प्रवृत्तं शास्त्रं वैशेषिकं[२] समाख्यातम् । एतानन्त्यविशेषानारभ्यैतत्स्थूलजगत्पर्यन्तो ह्यस्य विषयः । पुनः प्रत्यक्षानुमानाभ्यां यत्र सामान्याद्विशेषस्य प्रतिपत्तिः स दर्शनस्य वैशेषिको मार्ग[३] उक्त इत्यस्य तन्त्रस्य प्रमाणत्वमपेक्ष्य समाख्योक्ता । पुनरत्र शिल्पविधिना नाना कारणयुक्त्यों[४] द्रव्यगुणकर्मणामभिभूतानुद्भूतानभिव्यक्तधर्मान्प्रादुर्भाव्य परीक्ष्य च पदार्थानुशासनं विधीयते तस्मादिदं शास्त्रं विज्ञानमप्याख्यायते, विज्ञानं शिल्पशास्त्रयोरितिकोशात् ।

अस्य स्मर्ता प्रवर्तकश्चाहङ्काराभिमानी साक्षाद् वामदेवो नाम महेश्वरः । स एव कणाद आख्यातो, न कपोतवद्रथ्यां पातितान्कणान्भक्षयति स्मेति कश्चित्कपोलकल्पितः सामान्यभिक्षुकः

---

१. Physical Elements. २. Physical Science.
३. Inductive method of investigation. ४. Experimentalization with the help of apparatus.

कणादः । वमति सृष्ट्यादौ कणान्परमाणूनिति वामदेवोऽहङ्कारः । अत्ति आत्मसात्करोति कणान्परमाणून्सर्गान्त इतिकणादोऽहङ्कारः । तथा ह्याख्यानसमयः—

**यमाहुरेकं पुरुषं पुरातनं कणादनामानमजं महेश्वरम् ।**
**दक्षस्य यज्ञं विनिहत्य यो वै विनाश्यदेवानसुरान्सनातनः ।।**
**यं विदुर्भूततत्त्वज्ञं भूतेशं भूतभावनम् ।**
**वामदेवंविरूपाक्षमाहुस्तत्त्वविदो जनाः ॥**

(ह. वं. ३,८५,१६-१७) इति ।

वैदिकसिद्धान्तशास्त्रावतरणमुपमन्युनोक्तं कृष्णाय शैवे विद्यासंहितायां—हिरण्यगर्भनियोगाद् भगवान् शङ्करो नानास्थानप्रतिष्ठानविशिष्टां साङ्गोपाङ्गां कृत्स्नामेव शास्त्रसंहितां श्वेतादिकुलीशान्तेभ्योऽष्टाविंशतिप्रधानाचार्येभ्यः प्रोच्य तान् लोकहितायास्याः प्रवर्तने नियोजयामास । तच्छिष्याश्च श्वेतादिरुष्यान्ता द्वादशोत्तरशतं योगाचार्यास्तत्राधिकृता ईश्वरानियोगाद् देशकालाधिकारिभेदाद्युगे युगे सम्भूयेमां दर्शनसंहितां यथायोगं संस्कृत्य प्रवर्तयन्ति ।

**व्यासाश्चैवाष्टविंशत्का द्वापरे द्वापरे विभो ।**
**योगेश्वरावताराश्च प्रारम्भे च कलौ कलौ ॥**

(शि. पु. ३,५,५२) इत्युक्तेः ।

तेषु योगाचार्येषु प्रधानकणादाद्वामदेवादपरः कश्चिद्योगाचार्यः कणादनाम्नैव विख्यातः परिगणितः तथाचोक्तं तत्रैव—

अक्षपादः कणादश्च उलूको वत्स एव च ।
कुलिकश्चैव गर्गश्च मित्रको रुष्य एव च ॥
एते शिष्या महेशस्य योगाचार्यस्वरूपिणः ।
संख्या च शतमेतेषां सह द्वादशसंख्यया ॥
सर्वशास्त्रार्थतत्त्वज्ञा वेदवेदाङ्गपारगाः ।
सर्वद्वन्द्वसहा धीराः सर्वभूतहिते रताः ॥
ऋजवो मृदवः स्वस्था जितक्रोधा जितेन्द्रियाः ।
शिखाजटाः सर्वजटा अजटा मुण्डशीर्षकाः ॥
फलमूलाशनप्रायाः प्राणायामपरायणाः ॥

इत्यपरकणादाचार्येण पूर्वं संस्कृतस्य वैशेषिकतन्त्रस्य पुनरुलूकाचार्येण संस्कृतं, दुर्बोधत्वाच्छिन्नसम्प्रदायप्रायं विमर्शशून्यैः श्रद्धैकान्तवादिभिर्विप्रतिपादितञ्चेदं सूत्रस्थानं व्याख्येयत्वेनोपक्रान्तम् । अस्यैव प्रमाणस्थानं भगवताऽक्षपादेन गौतमापरनाम्नाचार्येण निवद्धमिदानीं न्यायदर्शनमुपलब्धं विजयते ।

एवमभ्यर्हिततममपीदं वैशेषिकं धर्मव्याख्यानं कैश्चिन्मन्दमतिभिस्तार्किकपाशैस्[१]तत्त्वमनवगच्छद्भिर्दुर्व्याख्यानैराकुलीकृत्यापलप्यते, तथा चैषामत्रदुर्वादः—वैशेषिकराद्धान्तो दुर्युक्तियोगाद्वेदविरोधाच्छिष्टापरिग्रहाच्च नापेक्षितव्यः । अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तानादरणीयो वेदवादिभिरिति ।

यत्तु शास्त्रमाम्नायप्रामाण्येन धर्मव्याख्यानमुपक्रम्याम्नायप्रामाण्येनैवोपसंहरति तच्छास्त्रनिन्दका यदि शिष्टा वेदवादिन-

१. Professional Philosophers.

श्च तर्हि कीदृशा अशिष्टा वेदनिन्दकाश्चेति महदाश्चर्यम् ! एषां श्रद्धालूनां[1] केनचिदन्धेन प्रवर्तितान्धपरम्परैवान्धश्रद्धामात्रेण शिष्टाचारो भवति। स्वाभिमतपक्षपुष्ट्यर्थं स्वमनीषयेष्टवादेन दुर्व्याख्यातो वेद एव च वेद इत्येव घटते, न ह्येषांदुर्वादानां हेत्वन्तरं किञ्चिदुपलभामहे।

वैशेषिकस्य प्रतिरूपं बौद्धागमे मायाशास्त्रमुच्यते। मायेति प्रज्ञानामसु पठितम्। विषयविशेषान्नानास्थानैर्विभक्तं भवति तन्त्रम्। यत्र सङ्ख्यापरिमाणाभ्यामर्थाः परिमीयन्ते विच्छेदेन विज्ञायन्ते तन्मानविशेषविज्ञानायं तन्त्रस्य विमानस्थानमुच्यते। द्रव्याणां तदनुविहितयोगाद्यत्रार्थोपकल्पनं विधीयते तत्कल्पस्थानमुक्तम्। तदियं विद्याकलेत्युभयात्मिका प्रज्ञा मायेत्यभिधीयते। विमर्शपूर्वकत्वाच्छिल्पप्राधान्यादिदं विज्ञानमप्युक्तम्।

तत्र यया माययेश्वरेण सत्त्वादिगुणेभ्यः सृष्टिः क्रियते सा गुणमयी दैवी मायोक्ता। एवं ब्राह्मी, वैष्णवी, रौद्री, गान्धर्वी राक्षसी, पैशाचीत्यादिनानामायाः कर्तृक्रियाकरणादिविशेषणाच्छास्त्रेष्वाख्यायन्ते।

किञ्च दितिपुत्राय मयाय तपस्यते प्रोक्ता भगवता

---

१. Fideists. २. Branch dealing with quantitative analysis. ३. Technology. ४. Science and art. ५. Science and Technology.

शङ्करेणेयं विद्या तेनाधीता चेति, मयस्येयमिति मायेत्यन्तर्भावितविशेषणार्थोऽप्यत्रमायाशब्दो द्रष्टव्यः । तद्वादो मायावादः । प्रत्यक्षप्रवृत्तत्वाच्चेदं महाशास्त्रमुच्यते । तथाचोक्तम् —

सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ।
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव कथ्यते देवि जगतां नाशकारणात् ॥
(प. पु. ६,२३६,१०) इति ।

सा चेयं विद्या मयेन मायाचार्येण शिष्यप्रशिष्यसहिताय स्वपुत्राय बलायोपादिष्टा कामभोगैश्वर्यानन्दभूतिविभूतीनां, सुसमृद्धभवनोद्यानाक्रीडाविहाराणां, नित्यप्रमुदितानुरक्तकलत्रापत्यबन्धुसुहृदनुचाराणां, राज्यैश्वर्यादिमहाबलपराक्रमलिप्सूनामहङ्कारोपासिनां मायाविनोदानामसुराणां हिताय बलादिमयशिष्यैर्युगे युगे प्रादुर्भूयाविष्क्रियते । अस्या एव विशेषौ कुहकलोकायतिकौ प्रसिद्धौ ।

यद्यपि निगमसमर्थितत्वादस्य महाशास्त्रस्य वेदार्थवत्त्वमुक्तं, तथाप्यस्मिञ्छास्त्रेऽसिद्धत्वादात्मनोऽनभ्युपगमाद्धर्माधर्मशौचाचारादिव्यवस्था नोपपद्यते । कर्मफलस्य च भोक्त्रभावाद्धिंसाऽहिंसादिपापपुण्यानुपपत्तेः —

यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥

१. Materialism as modern Science and Technology.

इत्येष एवात्रैषां मायावादिनां सिद्धान्तः[1]। तस्मादस्य वादस्य जगतां नाशकारकत्वमुक्तम्। तेन भौतिकमात्रप्रयोजकत्वात् प्रायेण निरपराधस्त्रीबालवृद्धादिजगतां नाशकारणात्कुहुकत्वादभ्युदयनिःश्रेयसानुपपत्तेरिदं शास्त्रमवैदिकमतिगर्हितं चोक्तम्।

यदा कदा ह्ययं मायाबादः प्रादुरभूत्, लोकस्य महद्वैशसमुपातिष्ठत। तथाह्यनुश्रूयते। पुरा त्रैपुरा असुरा मायिनां परमाचार्यं मयं शरणमाययुः। तेषां कृते —

**स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः।**
**दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः॥**
**ताभिस्तेऽसुरसेनान्यो लोकाँस्त्रीन्सेश्वरान्नृप।**
**स्मरन्तो नाशयाञ्चक्रुः पूर्ववैरमलक्षिताः॥**

(भा. ७,१०,५४-५५)

अयं मायावादो दस्युकर्मसु परिगणितः। तथा च बलिं प्रतीन्द्रोक्तिः—

**आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम्।**
**तान्दस्यून् विधुनोम्यज्ञान्पूर्वस्माच्च पदादधः॥**
**सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा।**
**शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिः सह॥**

(भा. ७,११,५) इति।

---

१. Led by the vague and base-less idea of Intuitionism which, infact, is the voice of Soul and which the Scientist cannot believe as such, for want of experimental proof.

अत्र दस्यति साहसेन मायाभिरुपक्षिपति ब्रह्मशासनं[1] भूतप्रकृती लोकाँश्चेति दस्युरुक्तः।

अस्मिन्कल्यादावपि शाल्वादिदैत्याप्रियचिकीर्षया मय इमां विद्यां प्रवर्तयामास। स च पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् —

बहुरूपैकरूपं तद् दृश्यते न च दृश्यते।
मायामयं मयकृतं दुर्विभाव्यं परैरभूत्॥
क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्द्धनि जले क्वचित्॥
आलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम्॥
(भा. १०,७६,२१-२२)

स लब्ध्वा कामगं यानं तमोधाम दुरासदम्।
ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन्॥
निरुध्य सेनया शाल्वो महत्या भरतर्षभ।
पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः।
सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः।
विहारान्स. विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः।
शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः।
प्रचण्डचक्रवातोऽभूद्रजसाऽऽच्छादिता दिशः॥
(भा. १०,७६,८-११) इति।

अत्र शिलादयो मायामया भौतिका[2] अस्त्रविशेषा उक्ता अनुसन्धेयाः।

१. Universal constitutional law. २. Of physical origin.

एवंविधामिदं शिल्पप्रधानमर्थकाममात्रप्रयोजनं वैशेषिकछायाभूतमसुरजनसंसेव्यं मायाशास्त्रमत्र विवेकार्थं प्रदर्शितम्।

अत्र प्रकरणे मनुष्याणां स्वभावसंपद्भेदाद् देवत्वासुरत्वादिविभागः कल्प्यते न जातिदेशसम्बन्धविशेषात्। रावणादयो ब्राह्मणाः कंसशाल्वादयश्च क्षत्रिया असुरा आख्यायन्ते। स च देवासुरसंपद्विवेको गीतादिस्मृतिषु पुराणेषु च विस्तरेणोक्तो द्रष्टव्यः। इह तु सदसद्विद्यासम्बन्धाद्दिङ्मात्रं प्रदर्शितम्। सामान्यतस्तु—

**दानवा राज्यमिच्छन्ति महाबलापराक्रमाः।**
**तप इच्छन्ति सहिता देवाः सत्यपराक्रमाः॥**

इत्युक्तं हरिवंशे (३, ३१, २)। अत्र दुन्वन्ति अवखण्डयन्ति सत्यं ब्रह्मशासनमितिदानवाः। प्रत्यक्षं लौकिकं च बलं महाबलमुक्तम्। तप इत्यात्मतेज उच्यते। सर्वप्राणिहितमभिसन्धाय तपश्चरन्ति देवाः, न शुम्भादिवत्केवलं स्वस्य स्वकीयानां वा हितायेत्यनयोर्विशेषः।

**अथ पाखण्डशास्त्रावतारः**—पातीति पाः। वेदो धर्मश्च पाशब्देनाभिधीयते। वेदोक्तं धर्मं खण्डयतीतिपाखण्डशास्त्रमाहुः। तस्योत्पत्तिः श्रूयते पाद्मे उत्तरखण्डे उमामहेश्वरसंवादे।

कल्पादौ प्राजापत्यसामान्याद् देवासुरेषु समान आसीद्वैदिको धर्मः। तत्र नमुच्याद्या असुरास्त्रयीमाश्रित्य प्राप्ताव्याहतबलपराक्रमाः स्वभावदोषाद् ब्रह्मशासनमुत्क्षिप्य देवान् विजित्य

त्रैलोक्यं पीडयामासुः । साहसिकानां बलेष्वनाधिकारस्य सर्वत्र सामान्येन विहितत्वाद्ब्रह्मबलस्य चापारणीयत्वाल्लोकसंरक्षणार्थं तेषां विमोहनाय वैदिकधर्माच्च्यावनाय च विष्णुशङ्करादिभिः पाखण्ड-शास्त्रं प्रणीतम् तत्पुनर्युगे युगे पाखण्डाचार्यैः शङ्करनियोगात्तामसीं प्रकृतिमवष्टभ्य देशकालाधिकारिभेदाद्यथायोगं संस्कृत्य प्रचार्यते ।

शतं हि पंथानः वेदे प्राणिनां भूतय उपदिष्टा सन्ति । तत्र यज्ञरूपश्रेष्ठतमकर्मणः एवात्र पाखण्डशास्त्रे गोपनमिष्टं तस्यैव ह्यव्याहतशक्त्यदृष्टजनकत्वात् । तत्सम्बन्धादन्येषामपि वैदिक-रहस्यकर्मणां गोपनं विधीयते । भक्तिदानज्ञानवैराग्यादिपावनानां तु गोपनं नेष्टं प्रयोजनाभावात् । एतावदेव पाखण्डशास्त्रस्य वेदबाह्यत्वमुक्तम् । वेदस्य निगमांशे तु देवर्ष्यार्यम्लेच्छासुराणां समानोऽधिकारस्तस्य गोप्यत्वं नेष्टम् ।

बौद्धागमे मायावादे च वेदस्य स्पष्टापलापादनपेक्षत्वाच्च साक्षात्पाखण्डत्वं तु स्वाभाविकमेव । किन्तु कलौ वैदिकेषूत्पत्स्य-मानाः दैत्या महामहिमानं वेदवादं केवलापलापमात्रेण सहसा न त्यक्ष्यन्तीति तेषां कृतेऽपार्थीकृतवेदव्याजेनैवौपधर्म्यप्रतिपादकं प्रच्छन्नपाखण्डशास्त्रं प्रवर्तितमिदानीं दृश्यते । तथा चोक्तं तत्रैव—

मयैव कथ्यते देवि कलौ ब्राह्मणरूपिणा ।
अपार्थं श्रुतिवाक्यानां दर्शितं लोकगर्हितम् ।
कर्मस्वरूप त्याज्यत्वं यत्र वै प्रतिपाद्यते ।
सर्वकर्मपरिभ्रष्टो विकर्मस्थः स उच्यते ।

**परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते ।**
**ब्रह्मणोऽत्र परं रूपं निर्गुणं वक्ष्यते मया ॥**

अन्योऽपि पाखण्डप्रवर्तने हेतुरस्ति । मन्दमतयो लेखास्थवृत्तास्त्रय्यामनधिकृताः शास्त्रोपपत्तिं विनाऽपि श्रद्धामात्रेण धर्ममनुतिष्ठन्तः कथंचित्फलभाजो भविष्यन्त्येवेति तेषां परतन्त्रप्रज्ञानां धर्मे प्रवृत्त्यर्थमधर्माच्च निवृत्त्यर्थं मिथ्यारोचकभयानकवचनवादेनार्थवादेन, तत्त्वाध्यवसायसंरक्षणार्थं छलवितण्डाहेत्वाभासैरपार्थीकृतवेदप्रमाणेन कचित्साक्षाद्वेदवादापलापव्याजेन च भक्त्यादिसुखसाध्यधर्मस्य श्रेष्ठतमत्वप्रतिष्ठापनार्थं तदर्थं च तत्प्रवर्तकानामाचार्याणां ऋषिभ्योऽपि शिष्टतरत्वाप्ततरत्वप्रतिष्ठापनार्थं च विष्णुशंकराद्यवतारत्वेन प्रतिपादनं क्रियते । अस्यार्थवादशास्त्रस्य केवलश्रद्धाप्रतिष्ठापनमात्रेणार्थवत्त्वं स्वस्मिन् त्वानर्थक्यमेवेति द्रष्टव्यम् । इदमत्रोदाहरणमर्थवादशास्त्रस्य महाभारते वनपर्वणि यक्षयुधिष्ठिरसम्वादे :–

**श्रुतयो विभिन्नाः स्मृतयो विभिन्ना नैको मुनिर्यस्य मतं प्रमाणम् ।**
**धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पंथा इति ।**

एवं पाखण्डांशबहुलमतिसङ्कीर्णं च तत्त्वमनवगच्छाद्भिः कैश्चिद्विज्ञानशून्यैः कल्याचार्यैर्दुर्व्याख्यानैराकुलीकृत्येदं स्मार्त्तं सच्छास्त्रमनाविलमपि कलुषीकृतम् । तथा चोक्तम्—

**अर्थवादः परंब्रह्म वेदार्थ इति तं विदुः ।**
**अनिर्णिक्तमविज्ञातं दायाद्यमिवधार्यते ॥**

(ह. वं. ३,४,४९) इति ।

तत्फलं चेदं यदिदानीमनुभूयते—

**योगी सिद्धोऽथवा ज्ञानी सत्क्रियोऽत्र न दृश्यते।**
**कलिदावानलेनाद्य साधनं भस्मतां गतम्॥**

(प. पु. ६,१९३,३६) इति।

यस्माद्विदुषां कृते तत्त्वमुपपादनीयं, तत्तदधिकारानुरोधात्पाखण्डार्थवादावपि रक्षणीयौ, तस्मात्तन्त्राचार्यास्तत्रोपायं विमृश्येदं स्मृतिशास्त्रं विलक्षणेन विधिना सूत्रयाञ्चक्रुः। तेन दुर्बोधत्वान्निपुणतरमीमांसावगम्यत्वाच्चायं सूत्रग्रन्थोऽसंदिग्धोऽपि संदिग्ध इव, अव्याहतोऽपि व्याहत इवाकृतबुद्धीनामवभासते। ततश्च पाखण्डार्थवादातियोगान्मूढैः स्मृतिषु विरोधवादः कल्पितः। वस्तुतस्तु **व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणं** भवति सूत्रमित्येष ह्याचार्याणां समयः। तस्मादत्र शास्त्रविशेषप्रतिपत्त्यर्थं व्यासोक्ता स्मृत्याविरोधमीमांसोपप्रदर्श्यते। तत्रावकाशबलेन सिद्धान्तस्मृतिषु प्रामाण्यव्यवस्था नोपपद्यत इत्याह—

**स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्॥** (ब्र. सू. २,१,१)।

इदमत्र स्मृतिविरोधवादिभिश्चोद्यते—स्मृतयस्तावद्वेदनिरपेक्षेण स्वतन्त्रतर्कावष्टम्भेनार्थान्प्रतिष्ठापयन्ति, अतोऽप्रमाणं वेदार्थावधारणे पुरुषविद्याऽनित्यत्वात्। तेन यावतांशेनैताः स्वपक्षं पुष्णन्ति तावन्मात्रमासां प्रामाण्यमित्येता अप्यवकाशबलेन

ग्राह्याः। तस्माद्यन्मनुरब्रवीत्तदेव भेषजं, यत्तु कपिलोऽब्रवीत्तद भेषजम्। तथा च साङ्ख्यमसद्योगोऽसन्। वैशेषिकं त्वर्धत्रैनाशिकं न वैदिकैः केनचिदप्यंशेनादरणीयम्। सर्वमपीदं स्मृतिशास्त्रमस दित्यादि विग्रहवादेन दुराग्रहानुद्घोषयन्त एते विरोधवादिनः कलहकण्डूकलुषितधियो मल्लाचार्याः परस्परं गर्दभबलीवर्दाद्युपाधिभिर्विभूषयन्तो वहूत्सवं मन्यन्ते।

अत्रायं समाधिः। स्वतन्त्रतर्कबलेनैता अर्थान्प्रतिष्ठापयन्तीत्ययं धूर्तवादस्तु पूर्वं स्मृतिलक्षणप्रकरणे निरस्तः। अवकाशबलेनैता ग्राह्या इति तु नोपपद्यते। इतिकर्तव्यतायां देशकालाधिकारिभेदाद्विकल्पविरोधयोः साक्षाद्विधीयमानत्वादाचारस्मृतीनामत्रकाशबलेन यथायोगं ग्रहणं तु युज्यते। अत्रानवकाशा अन्यत्र सावकाशा भविष्यन्तीति। सिद्धान्तेषु तावद्विकल्पविरोधयोरनवकल्पात्सिद्धान्तस्मृतीनां प्रामाण्येऽवकाशबलं न प्रसज्जते। ननु—

**इतरेषाञ्चानुपलब्धेः (२)।**

श्रुतिविरुद्धाः परस्परविरुद्धाश्चैता दृश्यन्ते। तथाहि श्रुत्युक्तब्रह्मकारणवादस्य साङ्ख्ययोगवैशेषिकस्मृतिष्वनुपलब्धिः। साङ्ख्ययोगोक्तस्य महत्तत्त्वस्य वैशेषिकेऽनुपलब्धिरित्यादिकेषाञ्चिदर्थानां स्मृतिषु क्वचिदुपलब्धिरितरेषां चानुपलब्धिरिति परस्परविरुद्धं श्रुतिविरुद्धं च स्मृतिशास्त्रम्।

**एतेन योगः प्रयुक्तः (३)**

एतेन पूर्वोक्ताभ्युपगमविसंवादेन स्मृतिषु योगो नाम समन्वयः प्रयुक्त इति चेत्—

**न, विलक्षणत्वादस्य तथात्वं च शब्दात् (४) ।**

नास्ति स्मृतिषु परस्परविरोधो, नाप्येताः श्रुतिविरुद्धाः । योऽयमत्राविरोधाभासस्तदस्य शास्त्रस्य वैलक्षण्यमात्रं न विरोधः ।

यस्माद् ब्रह्मत एवास्य जगतः सृष्टिस्थितिप्रलया उक्तास्तस्माद् ब्रह्मैवेदं सर्वं, तस्य दर्शनमेकमेवब्रह्मदर्शनम् । तस्य विषयप्रयोजनाधिकार्याद्यनुबन्धानुरोधाद् भूमिषु विभाग उक्तः पुरस्तात् । तदस्य भूमिलक्षणविशेषाद्वैलक्षण्यमात्रं भवति न विरोधः।

शब्दादप्यत्र वैलक्षण्यं भवति । ऋष्यार्यम्लेच्छानां दर्शन शास्त्रेऽधिकारसामान्याद् वैदिकशब्दानामतिपरोक्षवृत्तित्वादत्र प्रयुक्तेभ्यो विलक्षणशब्देभ्योऽप्यस्य वेदाद्वैलक्षण्यमुक्तम् । तस्माच्छ्रुतिभ्यः परस्परेण च स्मृतीनां वैलक्षण्यमात्रं न वैतथ्यमिति । संयोगसंस्कारादयोऽर्थाः शास्त्रे उपात्ताः किन्तु तेषां लक्षणंनोक्तं तस्मादप्यस्य वैलक्षण्यमुक्तम् ।

अपि च शब्देभ्य एवास्य शास्त्रस्य तथात्वं सिध्यति । प्रकृति प्रत्ययात्मकस्य स्वरसंस्कारविशिष्टस्य शब्दस्यात्र समाख्याबलेनार्थोऽवरुध्यते न तु रूढ्या । एवं व्याख्याताच्छब्दादस्य तथात्वं सिध्यति । न रूढया स्वमनीषया पर्यायमात्रेण वा व्याख्याताच्छाब्दादिति ।

नन्वनेकार्थत्वाच्छब्दो विवक्षितार्थादन्यमेवार्थमभिमानयिष्यतीत्यभिमानिव्यपदेशः संदिग्धार्थश्च सः। तत्कथं विवक्षितार्थप्रतिपत्तिरित्याह —

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् (५)।**

योऽयमभिमानिव्यपदेशः शास्त्रे प्रयुक्तो भवति स विशेषानुगतिभ्यां प्रयुक्तस्तथैव च व्याख्यातव्यः। यथा संयोगशब्दो जन्यसंयोगेऽजेऽपि च प्रयुज्यते। तथाचेन्द्रियार्थसन्निकर्ष उक्तः। स च सन्निकर्ष इन्द्रियार्थयोर्द्रव्यभूतयोर्नोपपद्यत इति तद्गत संस्कारयोः सन्निकर्षो विवक्षितो ग्राह्यः। एवंविधा व्यपदेशाः शास्त्रे विशेषानुगतिभ्यामवरुध्य व्याख्यातव्याः। कथमित्युच्यते —

समाख्यातः सामान्येनानुगतोऽर्थो ग्रन्थे स्थानविशेषादुन्नेयः। स्थानेऽपिसामान्येनान्वागतोऽर्थः प्रकरणविशेषादवधार्यः। ततोऽपि संदिग्धोऽर्थो वाक्यात्प्रतिपद्यते। एवं प्रत्ययाद्धातुतश्च यथायोगं विशेषानुगतिभ्यां मीमांस्यार्थो निर्णेतव्यो न तु स्वबुद्धि दोषात्तत्त्वमप्रतिपद्यमानेन केवलविग्रहदृष्ट्याऽलक्षणमिति विडम्बनीयं भवति शास्त्रम। अन्य एव हि वेत्तेर्वेदोऽन्यश्च विन्दतेरिति श्रुतिसाम्येऽपि धातुभेदस्ततश्चार्थ भेद इति।

अपि च ये ज्ञानविज्ञानसंपन्ना विमर्शशीलास्तेऽधिकारिणो विशेषाः। परतन्त्र प्रज्ञाः श्रद्धामात्रावलम्बना विमर्शशून्यास्तेऽनुगतिकाः। तत्रानुगतिका अपि प्रायेणाप्तोपादिष्टमप्यर्थतर्केण बुभुत्सन्ते। तेप्यभिमानिव्यपदेशात्संदिग्धेऽर्थे स्वं स्वं मतमुप-

पाद्य श्रद्धां धारयिष्यन्तीत्यधिकारिविशेषानुगतिभ्यामभिमानिव्यपदेशाः शास्त्र उपात्ताः । तथा च वैष्णवीविभूतिषु विदुषां सुपर्णशब्देन त्रिवृद्ब्रह्म व्यपदिश्यते । अनुगतिकानां तु लोके प्रसिद्धः पक्षिविशेषो गरुडः । एवमन्यत्राप्यधिकारिविशेषानुगतिभ्यां व्यपदेशा द्रष्टव्या इति ।

अपि च कापिलं साङ्ख्यं, औलूक्यं वैशेषिकं पातञ्जलं योगसूत्रमित्यादिकर्तृपुरुषव्यपदेशात्पुरुषविद्याऽनित्यत्वाच्च नातिप्रामाण्यमुपपद्यते शास्त्रस्येति चेन्न । स ह्यभिमानिव्यपदेशो विशेषानुगतिभ्याम् । अनादिपरम्परया सामान्येनान्वागतं शास्त्रं देशकालाधिकारिभेदादाचार्यविशेषेण संस्कृतं तन्नाम्नाऽख्यायते ।

**दृश्यते तु (६)**

यथा वाजसनेयीशाखा, कात्यायनसूत्रमिति संस्कर्तृनाम्ना व्यवहारो दृश्यते । एवमभिमानिव्यपदेशसंवद्धेष्वर्थेषु शास्त्रे प्राचुर्येण दृष्टान्ता उपलभ्यन्त इति । अपरं विरोधमाशङ्क्य समाधत्ते—

**असदिति चेन्न, प्रतिषेधमात्रत्वात् (७) ।**

साङ्ख्यवैशेषिकयोरीश्वरस्य तावन्नाम्नाऽपि ग्रहणं नोपलभ्यते । ईश्वरानपेक्षैव च सृष्टिरुक्ता । तस्मादेतन्मते ईश्वरो नास्तीत्यनीश्वरवादित्वमनयोः प्राप्नोति । एवं वैशेषिकमते सत्त्वादिप्रधानगुणा न सन्ति । साङ्ख्यानां तावत्समवायो नास्तीत्यसद्वाददर्शनाद्विरोध इति चेन्न । साङ्ख्यवैशेषिकयोर्यदीश्वरस्याग्रहणं तत्प्रतिषेधमात्रं प्रयोजनाभावादविषयत्वाच्च, नासद्वा-

दात् । नहि तत्रेश्वरो नास्तीतिप्रतिषेध्यत्वेनोक्तं क्वचिद् दृश्यते। न च प्रतिषेधमात्रमसद्वादो भवति। एवमन्येषामप्यर्थानामग्रहण-मात्रान्नासद्वादः सिध्यति । पुनः शङ्कते—

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् (८) ।

आसु स्मृतिषु यथा सृष्टौ विसंवादस्तथैव प्रलयविषयेऽपि विरोधो दृश्यते तस्मादसमञ्जसं स्मृतिशास्त्रमिति चेत्—

न तु, दृष्टान्तभावात् (९) ।

वैशेषिकेन विधिना विशेषेभ्य उपरितनानामहङ्कारादितत्त्वा-नामविद्यातोऽस्मिन्तन्त्रे परमाणुभ्यः प्रवृत्तो यो सर्गः स एव विषयः। परमाणुपर्यन्त एवात्र लयः। अयमेव शास्त्रे नैमित्तिको लयः प्रसिद्धः। एवं पुरुषस्याप्यत्र ब्राह्मं पदं निःश्रेयसमुक्तं सा हि काष्ठा श्रेयसः।

साङ्ख्ययोगानां तावत्प्रधानादिसृष्टिप्रतिपादनं विषयस्ततः परस्य ब्रह्मणस्तत्राविषयत्वादप्रयोजकत्वाच्च प्रधान एव च लयः। अयं प्राकृतिको लयः शास्त्रे प्रसिद्धः। पुरुषस्यात्र कैवल्यं परमं पदमिति ।

अत्रोभयविधेऽपि क्रमे सृष्टिलयौ पर्यायेण नित्यं प्रवर्तेते। नित्यमुदेत्यस्तं चैति सूर्य इत्यहोरात्रं नित्यमिति दृष्टान्तादन-योर्नित्यत्वमुक्तम् ।

ततः परमाण्डसृष्टिरुक्ता सा च नित्योक्ता। तस्या नास्त्या-त्यन्तिको लयः। तत्र मुक्तस्य यो ब्रह्मणि लयः स एवात्यन्तिको लयः शास्त्रेषु प्रसिद्धः। तस्मादत्र शास्त्रे क्रमविशेषाद् भेदेन सृष्टिलययोर्व्यवस्थोक्ता न विरोधात् ।

उक्ता स्मृतिसमन्वयमीमांसा। एतेन श्रुतिस्मृत्योरप्यविरोधो व्याख्यातः। तथापि लोके त्वयं विरोधाभासो विद्यत एवेति किंमूलः स इत्याह—

**स्वपक्षदोषाच्च (१०)।**

चकारात्तर्कदोषग्रहणम्। स च तर्कदोषोबुद्धिदोषाद् भवति न तर्काप्रतिष्ठानादित्यत्रानयोर्विशेषो द्रष्टव्यः। क्वचित्तर्कदोषादन्यथानुमानादप्रतिपत्तिर्भवति। तत्र पुनः सावधानेन निपुणतरतर्केण चार्थः परीक्षणीयः। विदुषामपि क्वचिदयं दोषः सम्भवेत्।

यद्यप्यसंदिग्धमनाविलं चेदं शास्त्रं तथापि स्वपक्षाग्रहदोषान्मूढैर्बहुधा विप्रतिपादितं विद्यते। प्रज्ञापराधमूलोऽयंमहादोषस्त्वचिकित्स्य एव। नह्येतद्दोषदुष्टानां दुर्वादानामेकैकश्येन प्रत्याख्यानं कर्तुं शक्यं गौरवात्। न चैते मूढा उपदेशशतैरपि विनेतुं शक्याः स्वभावदोषात्। नाप्येषां प्रादुर्भावः परिहर्तुं शक्यः कालदोषात्। तस्मान्नास्त्येषामज्ञानान्निर्मोक्षः। अपि च विदुषामपि—

**तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः (११)**

यस्मात्तर्कोऽप्रतिष्ठो नात्यन्तमविद्यानिवृत्तौ समर्थो भवति विप्लवात्। एवं शास्त्रीयज्ञानमपि तथैवापर्याप्तं भवति तर्कसाध्यव्याख्यानापेक्षत्वात्तस्मान्नोपपद्यतेऽविद्यात ऐकान्तिको विमोक्षः। तस्मात्सर्वस्यापि दर्शनज्ञानस्य वैदिकज्ञानस्य च निरतिशयसर्वज्ञतायां तात्पर्यं नोपपद्यते। सर्वज्ञत्वं तावद्विज्ञानादेव सम्भवति।

१. Due to Ideaological evils.

तद्विज्ञानमेवात्मप्रत्यक्षमाहुः। तथा ह्युक्तम् — **स योऽत एकैकमुपास्ते न स वेद। अकृत्स्नो ह्येषोऽत एकैकेन भवति आत्मेत्येवोपासीत अत्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा अनेन ह्येतत्सर्वं वेद** (बृह. १,४,७) इति। तस्मात्सर्वविद्यानामात्मज्ञाने तात्पर्यं भवति न सर्वज्ञताया मित्यभ्युदयनिःश्रेयसार्था शास्त्रप्रवृत्तिरुक्ता। यावता ज्ञानेन तत्सिद्धिर्भवति तदेव शास्त्रस्य विषयो भवति।

अत्र केचिन्मूढा **अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं** विज्ञानमात्रगम्यमपि ब्रह्म, शास्त्रबलेन तर्कबलेन वा व्याख्यातुं प्रवर्तन्ते, तत्तेषामनधिकारचेष्टामात्रम्। यत्रेदमाम्नातं —

**इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।**
**योऽस्या अध्यक्षः परमे व्योमन्त्सोऽङ्ग वेद यदि वा न वेद॥**
(ऋ. सं. १०,१२९,७) इति।

**न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः।**
**अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात्॥**
(कठ. १,२,८) इति। तत्रैवंविधं किंचिदनिर्वचनीयवस्तुभूतं ब्रह्म सर्वधर्मपरित्यागोपदेशपूर्वकं तत्त्वमस्यादिवाक्योपदेशमात्रेण प्रवचनेन वा स्वशिष्येभ्यः सहसा ये वितरन्ति तेभ्योऽतिवादिभ्यो नम एव ब्रूमः।

**अज्ञस्याल्पप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्।**
**महानरकजालेषु स तेन विनियोजितः॥**
(महो. ५,१०५) इति। तस्मादुक्तम् —

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥
(गी. २, ४६) इति।

एतेन शिष्टाः परिग्रहा अपि व्याख्याताः (१२)।

एवमेत्र स्मृत्यन्तरेषु पुराणादिषु च व्यपादिष्टा अर्थाः सम्यङ् निर्णिज्य मीमांस्य विज्ञाय च व्याख्यातव्याः।

वस्तुतस्तु य एवाम्नायोक्तो धर्मः स एव स्मृतिभिर्व्याख्यातः। नास्ति तत्र कश्चित्तात्त्विको विरोध इत्युक्तं पुरस्तात्।

न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते।
सर्वं विनिःसृतं शास्त्रं वेदशास्त्रात्सनातनात्॥
(बृ. यो. या. १२,१)

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥
(म. १२,१०६) इति।

इत्थं श्रुतिविरोधेन परस्परविरोधेन स्वतन्त्रतर्कावष्टम्भेन वा स्मृतयोऽर्थान्प्रतिष्ठापयन्तीति मूढजनश्रद्धासंरक्षणार्थं मूर्खाचार्यैः कल्पितोऽतिप्रयुक्तश्च सर्वपाखण्डनिबन्धनोऽर्थवादो निरस्तः। य एव धर्म आम्नायेनोक्तः स एवात्र तर्केणानुसन्धाय व्याख्यायते।

इति दर्शनभाष्यभूमिकात्मकं त्रिसूत्रीभाष्यम्।

---

**धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥४॥**

दर्शनविषयस्य सृष्टिक्रममपेक्ष्य भूमिषु विभाग उक्तः। तत्रादित्यब्रह्मणः सकाशादसत्सृष्टिपूर्वकमाण्डसृष्टिप्रतिपादनं ब्रह्मदर्शनविषय उक्तः। इयं दर्शनस्य प्रथमा भूमिरुक्ता।

प्रवृत्तात्प्रधानान्महत्तत्त्वादिक्रमेणाकाशाद्यन्त्यविशेषान्तस्तत्त्वसर्गः साङ्ख्यदर्शनविषयो द्वितीया भूमिः।

अन्त्यविशेषानारभ्यैतत्स्थूलजगत्पर्यन्तो भौतिकसर्गो वैशेषिकदर्शनविषयो दर्शनस्य तृतीया भूमिरुक्ता।

इदानीं प्रमाणदृष्ट्याऽऽसां भूमीनामनुशासनं समाख्यायते। तत्र ब्रह्मदर्शने वेदोपदिष्टानामर्थानामतीन्द्रियत्वात्प्रत्यक्षानुमानाभ्यां तत्त्वप्रतिपत्त्यसम्भवाद् वेदवचनेभ्यो मीमांसयाऽर्थावधारणेन तत्त्वज्ञानमुपायस्तस्मादिदं मीमांसादर्शनम्।

प्रधानसर्गे एक एव धर्मी गुणवैषम्यविमर्दात्तत्त्वात् तत्त्वान्तरत्वं प्रपद्यते। तेनोत्तरोत्तरकार्येषु प्रधानमात्रमेवान्वयेन सामान्यविशेषभावं प्रपद्यमानं परिणमते। तत्र कारणमविशेषः कार्यं चास्य

---

१. Classification of the Universe in six Genera as the subject of philosophy :— (1) Matter (2) Properties of matter (3) Force (4) Genus—General Classification of matter, Properties of matter and Force, (5) Their specific classification, (6) Their Composition.

विशेषो भवति। एवं प्रधानादविशेषान्महत्तत्त्वं कार्यं विशेषः। महतोऽविशेषस्याहङ्कारो विशेषः। तस्यापि सामान्यस्याऽकाशादिपंचभूतानि विशेषाः। ततः परं परिणामाभावादस्मिन्तत्त्वपरिणामे भूतान्यन्त्यविशेषा उक्ताः। अत्रैकस्यैव कारणस्यैकमनेकं वा कार्यं भवतीति द्रष्टव्यम्।

एषां तत्त्वानां लिङ्गाभावाल्लैङ्गिकं ज्ञानं नावकल्पते। एषां केवलयौगिकप्रत्यक्षेण प्रतिपत्तिः। यया प्रज्ञयैषां साक्षात्कारो भवति सा सङ्ख्या। एवं प्रसङ्ख्यानेन साक्षात्कृत्यैषां क्रमेण परिगणनं दर्शनस्य साङ्ख्यमार्ग उक्तः। नह्यत्र लिङ्गबलेन कार्यात् कारणज्ञानात्मकेन वैशेषिकमार्गेण तत्त्वदर्शनं सम्भवति।

तत्त्वपरिणामेऽन्त्यविशेषान् परमाणूनारभ्यैतत्स्थूलब्रह्माण्डपर्यन्तो भौतिकसर्गो वैशेषिकविषयः। अत्रकारणभूतानामनेकपरमाणूनामेकत्वेन गृह्यमाणं कार्यं सामान्यमुच्यते। परमाणवश्चास्य कारणभूताः पृथक् पृथक् गृहीता विशेषा उच्यन्ते। द्रव्यगुणकर्माणि सामान्यानि विशेषाश्च भवन्ति कार्यत्वात्। उक्तञ्च—**सामान्यमेकत्वकरं विशेषस्तु पृथक्कृत्**। (च. सं. १,१.४४) इति। कार्यात् सामान्यात् कारणानां विशेषाणां कार्यकारण परम्परया यत्र विवेचनं क्रियते स दर्शनस्य वैशेषिको[1] मार्ग उच्यते।

सामान्यमत्रेदं कार्यं जगत्। तस्य द्रव्यादयः षट् पदार्थाः कारणानि विशेषाः। द्रव्यस्य पुनः सामान्यस्य पृथिव्यादयो नव

१. **Inductive Method.**

विशेषाः। गुणस्य सामान्यस्य रूपादयः सप्तदश विशेषाः। कर्मण उत्क्षेपणादयः पंच विशेषा इत्यवमादि।

पुनः सामान्यमिति द्रव्यगुणकर्मसु साधर्म्यात्समानत्वबुद्धिमात्रः प्रत्ययविशेषोऽसत्पदार्थः। तथा विशेषोऽपि द्रव्यगुणकर्मसु वैधर्म्यात् पृथक्त्वबुद्धिमात्रोऽसत्पदार्थः। तदुक्तम्—**तुल्यार्थता हि सामान्यं विशेषस्तु विपर्ययः।** (**चं. सं.** १,१,४४) इति।

एवं सामान्यविशेषशब्दौऽनेकार्थौ दृष्टौ। अर्थारम्भे द्रव्यगुणकर्मवाचिनौ, कार्यं सामान्यं कारणं विशेष इति। सूत्रे तु पदार्थेषु परिगणितौ बुद्ध्यपेक्षौ भावमात्रौ, समानस्य भावः सामान्यं, विशेषस्य भावो विशेषं इति द्रष्टव्यम्।

एते सामान्यादयः पदार्था सामान्या एव। एषां कार्यकारणक्रमापेक्षा विशेषा नोपपद्यन्ते, असत्कार्यासम्भवात्। सत्तासामान्याद् द्रव्यगुणकर्मणामेको वर्गोऽर्थशब्देनाभिधीयते। एषामेव समवायोपपत्तिस्ततश्च कार्यकारणसम्बन्धात् सामान्यविशेषप्रपत्त्याऽर्थारम्भकत्वं चोक्तम्।

**समवाय उच्यते**—द्रव्येण गुणकर्मणामयुतसिद्धः सम्बन्धः समवायः। द्रव्येण कर्मगुणानां समवायो नित्य उक्तः। द्रव्यारम्भे कारणद्रव्याणां कार्येण सम्बन्धोऽनित्यः समवायः।

अयमत्र भौतिकसर्गे द्रव्यारम्भक्रमः। वाय्वादिचतुर्विधा भूतविशेषाः स्वस्वगुणकर्मविशिष्टाः परमाणुरूपा भूतानां मूलस्वरूपं सूक्ष्मं रूपमुच्यते।

---

१. Similarity. २. Differentiation.

तत्र पृथिव्यादिसजातीया द्वित्रिचतुरादिपरमाणवः संयोगैः सम्भूयैकं द्व्यणुकं त्र्यणुकं चतुरणुकं वाऽरभन्ते। स च परमाणुस्तत्सजातीयपरमाणुसमूहभूतोऽणुको वा यदा अन्यान् विजातीयानवाव्यणून् स्वसंयोगसाचिव्येनावक्षेपणेन कर्मणा धारणाकर्षणाभ्यां समवगृह्यैकत्वेनावस्थापयति तदा समवाय्युच्यते। अन्येऽवादयोऽणुकास्तत्र सामवायिकाः कयाऽपि दिग्देशव्यवस्थया वृक्षमूलमिव पीठानि समवायिनमाश्रित्य विधृता अवतिष्ठन्ते ते संयोगिनं उच्यन्ते। स एवंविधोऽयं नानापरमाणुसमवायभूतोऽवयवी पिठरवदेकत्वेन घटितोऽणुरुच्यते। सोऽयमणुर्भूतानां कार्यं द्वितीयं रूपं स्वरूपशब्देनाभिधीयते समवायिनाम्ना च व्यपदिश्यते। यथा पृथिवीसमवायिकारणकोऽणुः पृथिव्यणुरिति। केवलपार्थिवाप्ययोः स्वरूपाण्वोस्तेजोऽणुद्वारको यः संयुक्त संयोगः स पाकजः संयोगं उच्यते। पाकजसंयोगारब्धो योऽणुस्तद् भूतानां तृतीयं रूपं स्थूलशब्देन भाष्यते। भूयस्त्वात् पार्थिव आप्यो वा व्यपदिश्यते। इयमेव त्रुटिरेका। पाकजेनैव विभागेन भेत्तुं शक्या नान्यथा।

१. The central Primordial independant particle or cluster of such homogeneal particles in an atom—the Nucleus. २. The other elementary or composite particles dependant on and held up by the nucleus in the atomic configuration : the Galaxy of the nucleus, corresponding, perhaps, to mesons, hyperons, electrons etc. in the modern science. ३. The Atom. ४. Chemical Combination. ५. The Molecule.

आसां त्रुटीनां पुनर्यः संयोगः स प्रचयाख्यः संयोगः। तेन निष्पन्नोऽवयवी भूतप्रचय उच्यते। स एव नानासजातीयविजातीयत्रुटिप्रचयमात्रः काष्ठपाषाणादिद्रव्यसमुदायो भूयस्त्वात् पृथिव्यादिनाम्ना व्याह्रीयते। यत्रेदमुक्तम्—**जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टम्। तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेषु॥** (यो. द. भा. ३,१४) इति।

एवं स्थूलस्वरूपसूक्ष्मरूपाणां भूतानां व्यस्तसमस्तानां प्रचयरूपा इमे ग्रहनक्षत्रतारादिगोलाः देशकालाकाशेषु संदब्धाः समनस्केऽन्तरात्मनि समवेता इदं ब्रह्माण्डं विराट्पुरुष[1] उच्यते।

षडेवैते पदार्थाः। एष्वेव सर्वेषां सदसदात्मनां जगद्भावानामन्तर्भावो दृष्टः। अत्र केचिदेभ्यो व्यतिरिक्तमभावं नाम सप्तमं पदार्थं मन्यन्ते। भ्रान्तं तदुत्प्रेक्षामात्रम्। तस्य ज्ञानेऽन्तर्भावादभावो बुद्धिविशेषः। न ह्यस्य पदार्थान्तरत्वे प्रमाणमस्ति।

इदमत्र तत्त्वं। सत्कार्यवादे पदार्थेन तावद् धर्मधर्मिणोर्मध्य एकतरेण भवितव्यमिति। तत्र द्रव्यं धर्मिमात्रं[2] नास्य धर्मत्वमस्ति। गुणादयः पञ्च पदार्थास्तदाश्रिता अविनाभाविनश्चास्य धर्मा[3] भवन्ति। एषां धर्मित्वमपि सम्भाव्यते धर्मान्तरापेक्षया। तत्राभावो द्रव्यधर्मश्चेत् स्वीक्रियेत द्रव्यनिष्ठः स्यात्। तत्तु नास्ति। गेहे घट इत्यत्र घटनिष्ठो भावः प्रतिपद्यते। अपसारिते

---

१. The cosmos as the Supreme person. २. The 'thing-in-itself' or the Absolute substance. ३. Attributes—Properties, Energy and force etc.

तु घटे योऽभावः प्रतिपद्यते, न स घटनिष्ठो न गेहनिष्ठो नापि घटगेहसंसर्गनिष्ठः। संसर्गस्य तदानामभावान्नाभावस्याभावनिष्ठत्वमुपपद्यते। तस्मादध्यवसायमात्रोऽभावो बुद्धिविशेष इति।

धर्मित्वं त्वभावस्य नावकल्पतेऽसन्मात्रत्वात्। असतो ज्ञानमात्रत्वं तूक्तपूर्वम्। अभावः स्वतन्त्रः पदार्थ इति भवतु नाम केषांचित्तार्किकपाशानां दर्शनं सूत्रकारस्य त्वद्धा नास्ति। पदार्थसामान्यविशेषौ प्रकृत्यैवेह तद्विभागो विवक्षितो न कल्पितभावाभावविवक्षया। सत्यभावस्य पदार्थान्तरत्वेऽभिप्रेते सूत्रे तद्व्युदासेन प्रकृतहान्या को लाघव स्यात् सूत्रकारस्य ?

यदुच्यतेऽभावस्योल्लेखः कृतः सूत्रकारेणेति। बाढमेवमेवैतत्, न तु पदार्थान्तरत्वेनोल्लिखितः। नहि ग्रन्थे उल्लेखमात्रेण सर्वेषामर्थानां स्वतन्त्रपदार्थत्वं सूत्रकृदभिप्रेतमिति वक्तुम् शक्यते। प्रत्युत ज्ञाननिष्पत्तिप्रकरणे प्रतिपादनादभावस्य ज्ञानत्वमेव विवक्षितं सूत्रकृता। स्फुटञ्च तत्र सूत्रम् —— **असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत्**। ( ६,१,६,) इति। निरुपाख्यं सामान्यज्ञानमभावः। सोपाख्यं विशेषज्ञानं तु भावः। प्रकृतहान्याऽकृताभ्यागमेन शास्त्रविडम्बनं दुःसाहसमात्रं मल्लाचार्याणामित्यत्रापि यथायोगमध्यवसेयमित्यलं विस्तरेण।

पूर्वमभ्युदयनिश्रेयससिद्धिः प्रयोजनमुक्तं शास्त्रस्य। आभ्युदयिकानुष्ठानं विनाप्यस्य ज्ञानमात्रेणात्मनि उत्तरोत्तरोत्कृष्ट-

धर्मप्रसवात्तत्त्वज्ञानादात्मज्ञानेन निश्रेयससिद्धिर्भवतीत्यपि प्रयोजनं शास्त्रस्योक्तम् ॥४॥

तत्र द्रव्यसामान्यस्य विशेषानाह—

**पृथिव्यप्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥५॥**

क्रियागुणवद् द्रव्यमिति वक्ष्यति। यावन्तः क्रियागुणवद्-भावा जगति दृश्यन्ते, ते सामान्येन पृथिव्यादयो नवैव विद्यन्ते न न्यूना नाप्यधिका इतीतिशब्दार्थः।

पृथिव्यादिक्रमस्त्वेषामुत्तरोत्तरं पारसौक्ष्म्यद्योतनार्थः। पृथिव्यादयः पंच बाह्यैकैकेन्द्रियग्राह्या एको वर्गः। आकाशवर्जिते चत्वारो मूर्तिजातिव्यवधिविशिष्टा स्थूलस्वरूपसूक्ष्मात्मानः परिच्छिन्ना एको वर्गः। आकाशादय आत्मान्ताश्चत्वारो विभवः सौक्ष्म्याद् अनुक्रमेणोक्ताः। मनस आत्मापेक्षया स्थूलतरत्वेऽपि अन्तरतो विभुत्वाद् बाह्यतः परिच्छेदादणुत्वादन्ते पठनम्।

अथ कस्माद् द्रव्यमिति। द्रवत्यूर्ध्वं प्रसरति वृक्षरूपेणेति द्रुश्चित्सदात्मकं ब्रह्म। तस्य विकारो द्रव्यम।

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।** (गी १५,१) इति

---

१. Nine Catagories of Matter— (1) Earth, (2) Water, (3) Fire, (4) Air (Magnetism), (5) Ether, (6) Time, (7) Space, (8) Spirit (9) Mind. (See definitions (1-1-15, 17).

स्मृतेः सर्वा अपि विकृतयो द्रव्यम्। अयं महानात्माऽपि तद्-विकृतिरिति द्रव्यम्। एतद् द्रव्यस्य द्रव्यत्वम्।

परिच्छिन्नं¹ मूर्तिविशिष्टं सिकताशर्करादिवत् पृथक् खण्डात्मना गृह्यमाणं द्रव्यमणुः। तस्य परमापकृष्टोऽभेद्यो भाग एकोऽवयवः परमाणुरुच्यते²। पृथिव्यादीनि चत्वारि परिच्छिन्नानि स्थूलस्वरूपसूक्ष्माणि।

जलवदखण्डं सन्ततं निरवयवं द्रव्यं विभूच्यते³। आकाशादीनां विभूनामन्योऽन्यव्यावर्तका विशेषा विद्यन्ते। विविक्तमाकाशं विभ्वपि विच्छेद्यं यथा जलमविच्छिन्नमिवापि काष्ठलोष्टादिभिर्विच्छिद्यावकाशं ददात्येवमविष्टम्भि आकाशम्। विभुत्वादेकमेवाखण्डमहोदधिकल्पं, जलतरङ्गवच्छब्दसंस्कारयोग्यतावच्छिन्नं सर्वपरमाणुस्पृक्। अस्मिन् परमाणवो मत्स्यादिजलचरजन्तुवद् व्याप्रियमाणाः प्रवर्तन्ते।

ततोऽपि सूक्ष्मतरः कालो विभुः शून्यश्च। शून्यं नाम वस्तुशून्यमिव सदसदात्मकं समरसं तत्त्वम्। स्वयमपरिणाम्युदासीनश्च सन् परिणममानेषु कारणतया गृह्यमाणः। यथा गणितपरिकर्मणि शून्यं स्वयमसदपि सदात्मकानेकाद्यङ्कान् सम्बन्धमात्रेण गुणयति। शाश्वतश्च, वस्तुशून्यो बुद्धिनिर्माणोऽपि प्रत्यक्षवद् भासमानः। परिणामकारणात् कलनात्मको रजोविशिष्टश्च।

१. Discrete Matter. २. The Prime-Atom. ३. Continuous, Indiscrete.

ततोऽपि सूक्ष्मतरो देशः । स एव विवक्षाविशेषाद्दिगुच्यते । अयमपि कालवद् विभुः शून्यः शाश्वतः सदसदात्मा समरसः सदात्मकेषु सम्बन्धमात्राद् गुणहेतुः । किन्तु तमोविशेषान्निष्कलो ध्रुवश्चावभासते ।

ततोऽपि सूक्ष्मतरं मनः । बाह्यतः परमाणुवत्परिच्छिन्नमपि मध्येऽण्डवच्छुद्धसत्त्वमहोदधिरूपम् । ज्ञानक्रियासंस्कारयोग्यतावच्छिन्नम् । आत्माधिष्ठितमिन्दतीतीन्द्रियत्वमस्य विशेषोदिगादिभ्यो विद्यते ।

सूक्ष्मतमश्चात्मा सच्चिन्मात्रो ज्ञानघनः देशकालव्यापी परिणममानेषु एकरूपतया विद्यमानोऽपि नानात्वेनावभासमानत्वात्कूटस्थ उक्तः । इति विभुद्रव्याणां स्वरूपमुक्तम् । अथ गुणविशेषाः—

**रूपरसगन्धस्पर्शाः, सङ्ख्याः, परिमाणानि, पृथक्त्वम्, संयोगविभागौ, परत्वापरत्वे, बुद्धयः, सुखदुःखे, इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥६॥**

रूपादयश्चत्वारो गुणाः संस्कारात्मका बाह्यैकैकेन्द्रियग्राह्याः सामान्यादेको वर्गः । लोकेऽध्यवसायस्य पारदौर्बल्यक्रमेणोक्ताः । चाक्षुषं हि ग्रहणं बलवत्तमं भवति । श्रुतिरप्यत्र—**चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य एव ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्यात्** । (श. प. १४,८,१५,४) इति । अन्यथाप्रसिद्धमप्यर्थं लोकोऽयंदिदृक्षति ।

१. Undulatory.

दृष्टेऽर्थे जिज्ञासानिवृत्तिः । साऽध्यवसायस्य काष्ठेति प्राधान्याद् रूपादिक्रमः ।

रूपं चक्षुरिन्द्रियग्राह्यं रक्तपीतादि । रसो रसनेन्द्रियग्राह्यो मधुराम्लादिनानाविधः । गन्धो घ्राणेन्द्रियग्राह्यो नानाविधोऽपि इष्टानिष्टकारणात् सुरभिरसुरभिश्चेति द्विविधः । स्पर्शनेन्द्रियग्राह्यः शीत उष्णोऽनुष्णाशीतः शीतोष्णश्चेति चतुर्विधः स्पर्शो विद्यते ।

सङ्ख्याद्यपरत्वान्ताः सप्त गुणा असंस्कारात्मका[1] इन्द्रियसन्निकर्षरहिता रूपिद्रव्यसमवायाच्चाक्षुषा बुद्ध्यपेक्षा[2]श्चोक्ताः ।

सङ्ख्यानां बहुत्वाद् बहुवचनम् । द्विष्ठा ह्येकशब्दस्येह वृत्तिर्दृष्टा कार्त्स्न्ये सङ्ख्यायां च । यथा कृत्स्नमाकाशमद्वितीयमन्येभ्यो दिगादिद्रव्येभ्यः पृथगुपलभ्यमानम् । एकत्ववैशिष्ट्यात् पृथक्त्ववैशिष्ट्याच्चैकपृथक्त्वं विद्यते आकाशस्य । किंत्वद्वितीयत्वात् सङ्ख्या नास्ति । एकपृथक्त्वे सति पुनरेकत्वबुद्धिहेतुः सङ्ख्या । यथा कृत्स्ने आमलके एकत्वबुद्धि । आमलकान्तरेभ्यः पृथक्त्वात्तत्र पृथक्त्वबुद्धिरित्याकाशेन समानमित्युभयोरेकपृथक्त्वं समानम् । किन्तु द्वितीयामलकापेक्षयाऽस्मिन् पुनरेकत्वबुद्धिर्भवति । तृतीयामलकापेक्षया द्वितीयत्वं विद्यत इतीयं सङ्ख्या ।

आकाशस्याद्वितीयत्वान्नास्ति सङ्ख्या । भक्तिनिमित्ता हि सङ्ख्या भवति । तेन दिक्कालात्मगुणकर्माकाशेषु भक्त्याभावात्

---

१. Non-Undulatory. २. Not directly Perceptible but apparently conceived.

सङ्ख्या न विद्यते । यत्त्वेषु बहव आत्मानः, बहवः प्रदेशाः, बहवः क्षणाः, घटाकाशो मठाकाश इत्यादि सङ्ख्या व्यवहारः स भाक्तो द्रष्टव्यः ।

द्रव्येष्वियत्ताप्रत्ययहेतुर्गुणः परिमाणम्[१] । तेषामपि बहुत्वाद् बहुवचनम् । साचेयत्ता ह्रस्वं, दीर्घं, महदल्पमित्याद्यकाराबुद्धि-र्मूर्तेषुनानाकारहेतुरित्याकारः परिमाणमिति बोध्यम् । एतेन पृथक्त्व मुक्तमेकत्वविरोध्येकमेव ।

संयोगविभागौ कर्मजत्वसामान्यात् संगृह्य पठितौ । पृथक्-स्थितयोश्चलनपूर्वकमिलनेनात्यन्तसामीप्येनावस्थानं संयोगः । स चोभयकर्मजोऽन्यतरकर्मजो वेति सर्वत्र कर्मजन्यः स पुनर्द्विविधो विज्ञायते । यत्र तु कर्म संयोजने निमित्तमात्रं विद्यते, सिद्धायां संयोजनक्रियायां च निवर्तते स संयोगः संसर्गमात्रः । यथामलकयोः संसर्गः । यत्र तु कर्म सिद्धेऽपि संसर्गे चेष्टापूर्वकं संयुक्तयोर्धारणा-कर्षणरूपेण यावत्संयोगं सामान्येन प्रवर्तते स संयोगः । यथा लोहखण्डेऽवयवानां धारणाकर्षणरूपेण कर्मणा सामान्यप्रवृत्तिः पूर्वकः संयोगः । यथा मेषयोर्मल्लयोर्वा चेष्टासामान्यरूपः संयोगः[२] ।

तदित्थं संयोगे कर्मणो द्विधा कारणता विद्यते । निमित्त-कारणता सामान्यकारणता चेति । सा च व्यवस्था नोपपद्यते कारणान्तरं विना । कर्मणः प्रवृत्तिनिवृत्त्योः स्वयमक्षमत्वादा काशे चाविभवात् । तत्र कर्मप्रवृत्तौ यो हेतुः स संयोगी नाम

---

१. Dimensions and Shape.　२. Cohesion.

कर्मवतां गुणविशेषो रश्म्यात्मकः परमाणुं परितो कर्मवहो मण्डलविशेषः। ते च संयोगरश्मयः कुण्डलावर्त[1] संकोचविकास[2]शीला अभ्युपगम्यन्ते, तेन द्रव्येषु संयोगविभागोपपत्तिः। अन्ये संयोगरश्मयोऽन्ये च विभागरश्मय इत्ययं पक्षस्तु चिन्त्य इति।

संयुज्यतेऽनेन द्रव्यमिति संयोगः। स च द्रव्येषु स्वभावसिद्धो गुणोऽजश्च विद्यते। तत्पूर्वकेण कर्मणा यः संयोगो जन्यते स जन्यः संयोगः। तथा च सूत्रम्—**अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः** (७,२,८,) इति कर्मसंयोगाभ्यामुभाभ्यां संयोगनिष्पत्तिर्नैकतरेणेति निष्क्रियाणां संयोगानुपपत्तिः। तस्य पुनः संयोगस्य सामान्यस्य द्रव्यविशेषात् संयोगचेष्टाविशेषाच्च केचित् संदिग्धा विशेषा इह विविच्यन्ते—

**गुरुत्वं**[3] —फलभूगोलयोः संयोगावक्षेपणाभ्यां लघुतरत्वात् फलस्य भूमौ पतनं संयोग एव। **द्रवत्वं**[4] नाम द्रव्यावयवानां शिथिलः संयोगः। **स्नेहः**[5]–पार्थिवानामाप्यानां वा द्रव्याणामण्वन्तरालवर्तिकूपेष्वपां प्रविश्य शिथिलः संयोगः। इत्यादयः कार्यद्रव्येषु संयोगविशेषा विद्यन्ते। न ते गुणान्तराणि संयोगसामान्यादिति ध्येयम्। एतेन विभागो व्याख्यातः।

परत्वापरत्वे[6] परस्परापेक्षे इति संगृह्योक्ते। देशकालाभि-

---

१. Spring. २. Elastic. ३. Gravity. ४. Fluidity ५. Adhesion. ६. Ralative position of things in Time, Space and Order.

सम्बन्धाद् विप्रकृष्टे परत्वबुद्धिः समीपस्थेऽपरत्वबुद्धिरिति देश-कालनिष्ठेऽपि परत्वापरत्वे साहचर्याद् द्रव्येषूपचरिते गृह्येते। न तत्त्वतो वस्तुनिष्ठे।

बुद्ध्यादयः षडात्मगुणाः। बुद्धिर्नाम मनोन्तर्वर्तिशुद्धसत्त्व-महोदधौ ज्ञानसंस्काराः। तेन धर्मज्ञानवैराग्यैश्वर्याणां संस्कारा-त्मनां बुद्धौ समावेशः। न गुणान्तरत्वापत्तिः। बुद्धीनां बहुत्वमत एव। अध्यवसायात्मकं ज्ञानं बुद्धिरुच्यते[1]।

सुखादये[2] आत्मगुणाः संवेदनात्मकाः। ज्ञानसामान्येऽपि संशयनिर्णयलक्षणाभावादेषां बुद्धितोऽर्थान्तरत्वम्। आत्ममनसोः संयोगविशेषेभ्यो निष्पत्तेरेषां कारणविशेषात्परस्परेणार्थान्तरत्वम्। विकासात्मकं सुखमात्मनि संकोचात्मकं दुःखम्। संयोग इच्छा[3], द्वेषो विभागात्मकः। ज्ञानक्रियाया बलक्रियारूपेण परिणतिः प्रयत्नः।

संस्कारो वक्ष्यमाणो न गुणान्तरमिति। एते सप्तदशैव कारणद्रव्येषु अनपेक्षा मूलगुणा विद्यन्ते। कार्येषु यावन्तो गुरुत्वादयो गुणा उपलभ्यन्ते, ते सर्वे एभिरेव मूलगुणैरारब्धा भवन्ति। कारणगुणपूर्वका हि कार्यगुणा भवन्ति नापूर्वोत्प-त्तिरिति नियमात्। सूत्रे चकारः शब्दसंस्कारसमुच्चयार्थः। शब्द-स्येन्द्रियग्राह्यत्वात् साक्षाद् गुणान्तरत्वेऽपि अपवर्गात् कर्मभिः साधर्म्यमित्यतिव्याप्तेः पृथग् ग्रहणम्। संस्कारस्यापि सप्तदशभ्यो

---

१. Knowledge-Subject of Logic. २. Feelings-Subject of Aesthetics. ३. Willing—subject of Ethics.

गुणान्तरत्वम् । तथा च विपरिणामात् क्वचिद् गुणत्वं क्वचित् कर्मत्वमिति लक्षणव्यभिचाराच्चकारेणास्य समुच्चयो न साक्षाद् ग्रहणम् । अथ कर्मविभाग :—

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥७॥**

स्वातन्त्र्यात् प्राधान्याच्च विभागेन वचनम् । उत्क्षेपणादि-क्रमस्त्वेषामुत्तरोत्तरं चेष्टाधिक्यद्योतनार्थम् । तेन गमनं कर्मसु बलवत्तममुक्तम् । पञ्चविधमेव कर्मेत्यवधारणार्थ इति शब्दः ।

कर्मणां सामान्यकार्यं[1] कर्म न विद्यते । तस्मादुत्क्षेपणादि पंच कर्माणि कारणद्रव्यनिष्ठानि द्रष्टव्यानि । पुनश्चोद्देशवचने कार्यग्रहणस्यातन्त्रत्वात् पञ्चानामपि कर्मणां परमाणुनिष्ठत्वं बोध्यम् । तेन परमाणावप्याकुञ्चनप्रसारणे विद्येते इति गम्यते ।

सर्वं[2] कर्म[1] चलनात्मकं भवति । तत्र गमनप्रत्ययसामान्याद् गमनमात्रमेव कर्म विद्यते । तच्च सर्वत्र दिग्विशिष्टं दृश्यते । दिग्विशिष्टानि उत्क्षेपणादीनि पञ्चैव कर्मणो विशेषा विद्यन्ते । न न्यूना नाप्यधिका इत्यर्थः ।

तत्र परमाणोर्यन्नियतदिशि नियतगत्या ऋजुमार्गे चलनं तदिह तान्त्रिकं गमनं विवक्षितं न चलनमात्रमिति गमन[3]विशेषः । तच्चैवंविधं गमनं परमाणोराभिमुख्येनैव सम्भवति नानियमेन सर्वतो दिशि । नाप्यस्य परमाणोः पर्यायेण स्वतो दिक्परिवर्तने

१. Energy in motion.  २. All Forces are vectors in nature.  ३. Kinetic Force.

हेतुरस्ति । नापि स्वतस्तीव्रमन्दादिगतिविशेषा उत्पद्यन्ते । तस्मान्नियतचेष्टं स्वाभाविकमस्य गमनं नियतदिक्कं च । यस्यां दिशि परमाणोर्गमनं भवति तदस्य मुखं कल्प्यते । तेन परमाणोर्मुखपुच्छादिप्रदेशा उपपद्यन्ते। तथाहि वक्ष्यति— **एकदेशे इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः** (१०,१,७) इति ।

परमाणुः परमाण्वन्तरं यत्स्वदिश्याकर्षति तदवक्षेपणं कर्म[२] । येन कर्मणा परागुदस्यति तदुत्क्षेपणम्[३] । येन कर्मणा परमाणुः स्वस्मिन्नेव संकुचति आकारान्तरमापद्यते तदाकुञ्चनम्[४]। यत्प्रसरति बृहदाकारो भवति तत्प्रसारणम्[५] । परमाणोरुदरकल्पनयाऽकुञ्चनप्रसारणोपपत्तिः ।

## सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥८॥

पदार्थेषु सामान्यविशेषसमवाया असदात्मका केवलज्ञानात्मकाः । एषां परिणामाभावाद् विशेषा न विद्यन्ते । तस्मात् सामान्यान्येव । द्रव्यं सद्, गुणः सन्, कर्म च सदित्येषां साधर्म्यम् । अपि च कालत्रयेऽपि विद्यमानं वस्तु सदुच्यते ।

१. The Kinetic Force of the Prime-atom has a definite magnitude and velocity—direction and speed.
२. Force of Attraction. ३. Force of Repulsion.
४. Force of Contraction. ५. Force of Expansion.

तेन नित्यत्वमेषां साधर्म्यम्। यथा परमाणुः कार्येषु नानापरिणामाननुसरन्नपि स्वरूपान्न हीयते। यथा कार्यारम्भात् प्राक् तथैव कार्यावस्थः कार्यनाशे पुनस्तेनैव स्वरूपेण विद्यते तस्मात्सन्नुक्तः। अत्र पारिणामिकी नित्यता ग्राह्या न पारमार्थिकी। इयं पारिणामिकी नित्यता कारणरूपाणां द्रव्यगुणकर्मणां साधर्म्यम्।

द्रव्याणां द्रव्यं कार्यं, गुणानां गुणः, कर्मणां च संस्कारः कार्यम्। एषां कार्याणामनित्यत्वं साधर्म्यम्। आकाशादीनां कार्यत्वप्रतिषेधान्नित्यत्वमुक्तम्।

नित्यं द्रव्याश्रितत्वाद् गुणकर्मणां द्रव्यवत्त्वम्। देशकालाश्रितत्वाद् द्रव्याणां द्रव्यवत्त्वम्। तदेषां त्रयाणां साधर्म्यम्।

देशकालाकाशानां निष्क्रियत्वात् समवायाभावात् कार्यत्वं नास्ति। कारणत्वं त्वेषां तत्तत्प्रकरणे वक्ष्यते। पृथिव्यादिचतुर्णां परमाणुरूपाणां क्रियावतामेव समवायोपपत्तेः कार्यारम्भकत्वं ततश्च कार्यकारणभावात् सामान्यविशेषवत्त्वं साधर्म्यम्।

भूतानां शरीरेन्द्रियरूपेणात्मनि समवायस्य वैसर्गिकत्वाद्[१] विभक्तोऽस्य पन्था भौतिकसमवायात्[२]। तेन पृथिव्यप्तेजोवायूनामेव कार्यारम्भकत्वं सामान्यविशेषवत्त्वं च।

अथारम्भवादे मूलभूता नियमा उच्यन्ते। तत्र द्रव्यगुणकर्मारम्भे सामान्यनियमा[३]नाह—

१. Physiological Structure. २. Physical Structure.
३. Laws governing the composition of Matter, Properties and Force.

**द्रव्यगुणयोः साजातीयारम्भकत्वं साधर्म्यम् ॥९॥**

द्रव्यगुणौ सजातीयमेवारभेते न विजातीयमिति द्रव्याणि द्रव्यमेवारम्भन्ते न गुणम्। द्रव्यारम्भे गुणारम्भस्तु स्वयमेव प्रवर्तते समवायात्। एवमारब्धो गुणविशेषस्तु गुणाधीन एव न साक्षाद् द्रव्याधीन इत्यभिप्रायः।

**द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥१०॥**

द्वितीयानियममाह—बहूनि कारणद्रव्याण्येकं कार्यद्रव्यमारभन्ते। तच्च कार्यं कारणेभ्यो विलक्षणमिति द्रव्यान्तरं भवति। एवं बहवो गुणा एकं सामान्यं स्वतोविलक्षणं गुणान्तरमारभन्ते। अयमारम्भस्य तत्त्वपरिणामाद् विशेषो द्रष्टव्यः। कर्मारम्भे विशेषनियममाह—

**कर्म कर्मसाध्यं न विद्यते ॥११॥**

नानाकर्मणां संयोगे तु चतस्र एव गतयो विद्यन्ते। चलनात्मकं हि कर्मोक्तम्। तेन यच्चलनाऽऽत्मनोपलभ्यते तत् सत्प्रत्ययं कर्मैव कर्मत्वेन गृह्यतेऽस्मिन् तन्त्रे। तद् व्यतिरेकेणाप्रत्ययमसत्प्रत्ययं वा यत्कर्म द्रव्येऽवतिष्ठते स संस्कारः[२]। गतिरूपेणाप्रतीयमानत्वात् स गुणपक्षे[३] न्यस्तो न कर्मपक्षे।

अनेककर्मसमासे[४] यत्सत्प्रत्ययं कर्मारभ्यते तस्य चलन-

१. Matter is inconvertible in Property and Force, hence the law of conservation of Matter. २. Potential Energy. ३. Energy is taken here as a Property of matter and not force. ४. Compostion of Forces.

प्रत्ययसामान्यात् कारणकर्मभ्योऽविशेषात्कर्मान्तरत्वं न विद्यते। यत्तु संस्काररूपेण परिणमते तस्याप्रत्ययात्कर्मत्वं नेष्टम्। तेनानेककर्मभिः सिद्धस्य कर्मणः कर्मान्तरत्वं नास्त्यविशेषात्।

यत्तु कर्म तत्र संस्काररूपेण परिणतम्। स संस्कारस्त्रिविधो वेगो[1] भावना[2] स्थापकश्चेति[3]।

**वेगसंस्कारः**—शतपरमाणुकः पिण्डो नियतगत्या चलति। तयैव गत्या सहस्रपरमाणुकोऽपि पिण्डश्चलति। प्रतिपरमाण्वेकं कर्म कल्पयित्वा, शतपरमाणुके पिण्डे शतं कर्माणि सहस्रपरमाणुके सहस्रं कर्माणीति द्वयोर्गतिसाम्येऽपि कर्ममानमसमानं भवति। तत्र यत्कर्म गतिरूपेणाप्रतीयमानं तदप्रत्ययं कर्म वेगो नाम संस्कारो द्रव्यगुणः। तस्य गतिगुणितद्रव्यत्वेन प्रतिपत्तिः। तेनात्र गत्यात्मना प्रतीयमानो वेगः सत्प्रत्ययं कर्म। गतिरूपेणाऽप्रतीयमानमप्रत्ययं कर्म तु वेगो नाम संस्कारः।

द्रव्ये परमाणूनामदृश्यत्वादपरिसंख्येयत्वाच्च कर्षपलादिभारेण द्रव्यमानं व्यपदिश्यते। प्रतिक्षणं गतिश्चाङ्गुलादिमानेन व्यपदिश्येत।

**भावना**—नियतर्जुगत्या गच्छतः पिण्डस्य दिग्विक्षेपे यद् व्येति तद् विक्षेपकं कर्म भावनासंस्कारः। अगत्यात्मकत्वात् तदप्यप्रत्ययमेव। यथैको द्विकर्षमितः पिण्डः पश्चाद् दक्षिणतश्च समकोणाद् युगपत् कर्मद्वयेन नोदितश्चतुरङ्गुलगत्या प्राक् चलति,

---

१. Energy in the form of Momentum. २. Deflection. ३. Inertia of position as Static Energy.

ष्यङ्गुलगत्या चोदक् चलति। तेनास्मिन् अष्टौ प्राचीनवेगाः, षड् वेगाश्चोदीचीना आहिता भवन्ति। एवं चतुर्दश वेगा युगपत् सम्प्रवर्तन्ते। किन्तु गतिद्वयसमासात् पिण्डे एकैवोभयदिङ्मध्यानुपातिनी गतिर्जायते। सा च केवलपञ्चाङ्गुलमेव विज्ञायते। तेन समस्तगत्या पिण्डे दशैव वेगा लभ्यन्ते। ये चत्वारो वेगा नष्टास्ते दिग्विक्षेपात्मकेन भावनासंस्कारेण परिणताः। तदप्यप्रत्ययं कर्म संस्कारः।

**स्थापकसंस्कारः**—तदेव द्विकर्षमितः पिण्डश्चतुरङ्गुलगत्या प्राक् चलति। तस्मिन्नष्टौ प्राचीनवेगा आधीयन्ते। यदि तावत्तत्र कर्मणा प्रत्यङ् नोद्यते तदाप्यष्टावेव वेगाः प्रवर्तन्ते किन्तु प्रतिचीना भवन्तीति दिग्विरोधादुभयोर्नाशे पिण्डः स्थिरो भवति। स पिण्डे स्थापको नाम संस्कार उच्यते।

वेगभावनासंस्कारौ कर्मसाहचर्यादप्रत्ययौ उक्तौ। स्थापकसंस्कारे तु कर्मणः सर्वथाऽभावप्रत्ययादिदमसत्प्रत्ययं कर्मोच्यते। अत्र केचित् स्थितिसंस्कारं चतुर्थं नित्यं मन्यन्ते। सर्वमनात्मद्रव्यमनर्षणं विद्यते। प्रवृत्तं न स्वयं निवर्तते, निवृत्तं पुनर्न स्वयं प्रवर्तते। यथावस्थितमेव विद्यते। स्थिरेऽस्थिरे वा पिण्डे यथावस्थमेवावस्थानं स्थितिसंस्कारः[१] उक्तः।

या कर्मणः संस्काररूपेण परिणतिः स कर्मणो नाशोऽभावश्चोक्तः संस्कारस्य चोत्पत्तिरुक्ता। संस्कारस्य च पुनः कर्म-

१. Inertia of position or motion.

रूपेण परिणतिः संस्कारनाशः कर्मणश्चोत्पत्तिरुक्ता। नह्यपूर्वोत्पत्तिर्भवति।

**भ्रमणसंस्कारः**[1]—गमनावक्षेपणाभ्यां तन्निष्पत्तिः। ऋजुगत्या गच्छद् द्रव्यं यदा बाह्यास्थिरपदात् सततमवाक्षिप्यते तदा भ्रमणं प्रपद्यते। तेन गमननित्यसहचरो भावनासंस्कारो भ्रमणम्। यथा पृथिव्या प्रतिक्षणं भाव्यमानं चन्द्रमसो गमनं भ्रमणत्वं प्रपद्यते। एतेन सूर्यादिग्रहनक्षत्रगोलानां यथायोगं भ्रमणमूर्ध्वाधः सव्यापसव्यतश्च परिलम्बनमित्यादिनानासंस्कारा व्याख्याता वेदितव्याः।

**किरणसंस्कारः**[2]—यदैकेन स्थिरपरमाणुना अन्यो गतिमान् परमाणुः सततमवक्षिप्यते तदा भ्रमणं प्रपद्यते। तत्र योऽवक्षेपकः स्थिरपरमाणुः स समवायी भवति। अवक्षिप्तश्चास्य संयोगी परमाणुरुच्यते। तत्र यदि समवायिपरमाणुरपि ऋजुगत्या गच्छति तदा कृत्स्न एवाणुप्रबन्ध ऋजुगत्यागच्छति। तेन संयोगिनि भ्रमणस्योदयादुदयान्तरविशेषाद् वलयाकारा गतिर्जायते। तत्किरणमुच्यते। कृत्स्नोऽप्यणुप्रबन्धः किरणं[3] उच्यते।

एषु किरणेषु संयोगिसमवायिनां पृथिव्यादिजातिविकल्पान्नाना किरणाः[4] सम्भवन्ति। ते चागमोक्ता वेदितव्याः। एषां समभिव्याहारात् लोकलोकान्तरेषु परस्वादानरूपव्यापारो यज्ञ

---

१. Revolution and Rotation.  २. Spiral motion.
३. Ray.  ४. Diflerent types of rays.

उच्यते । तथा च तैजसैः परमाणुभिः पार्थिवा आप्याश्च सूर्यं प्रतिवाह्यन्ते । सूर्यात्तैजसाः पार्थिवैराप्यैर्वा परमाणुभिः पृथिवीं सम्प्रपद्यन्ते। एवं लोकान्तरेषु अप्ययं यज्ञः सततं प्रवर्तमान आस्ते। अत्रेदमुक्तम् —

**अग्नौ प्रास्ता आहुतिः सम्यगादित्यमुपतिष्ठते ।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥** (म. ३,७६)

तादिदं संस्कारविज्ञानं मायिकैर्विमानस्थाने बहुशः प्रपाश्चितं शिल्पकर्माणि कुहुकेषु च प्रयुज्यमानं दृष्टमिह निगमोद्वलनार्थं दिङ्मात्रेणोपप्रदर्शितम् ।

उक्ता द्रव्येषु क्रियासंस्काराः । गुणसंकस्रा ज्ञानसंस्काराश्चोपरिष्टाद् वक्ष्यन्ते । कर्माभिरारब्धस्य कर्मणः कर्मान्तरत्वं नास्ति अविशेषात् । तस्य संस्कारात्मकत्वात्कर्मत्वमेव नास्ति । गुणत्वादस्य कर्मभ्योऽर्थान्तरत्वमिति कर्म कर्म साध्यं नास्ति ।

अथेहार्थारम्भे कार्यावस्थायां कारणं केन रूपेणावतिष्ठत इत्याह —

**न द्रव्यं कार्यं कारणं च बधति ॥१२॥**

बधिरयं भ्वादिगणीयः परस्मैपदी विरोधार्थो धातुः । द्रव्ये कार्यावस्थायां कारणानि स्वेनैवरूपेणावतिष्ठन्ते । न स्वरूपाद्धीयन्ते ।

---

१. Science of vibrations. २. Vibratory motion in matter. ३. Vibrations of property. ४. Vibrations of Knowledge—Ideation.

सान्तराला हि कार्ये परमाणव आकाशेन व्यवहिताः संयोगेन परस्पराकृष्टा विधृताश्चावतिष्ठन्ते। तेन युगपत् कार्यरूपेण कारणरूपेण चोभयथा विद्यन्ते। नास्ति कारणकार्ययोर्विरोधः। गुणानां तु विशेषः—

## उभयथा गुणाः ॥१३॥

गुणेषु सन्निकृष्टासन्निकृष्टभेदाद् व्यवस्था। संख्याद्यसन्निकृष्टगुणः कार्यं कारणं च न बधति। यादृशः कारणावस्थः कार्यावस्थोऽपि तेनैव स्वरूपेणावतिष्ठते। कारणे परमाणौ पारिमाण्डल्यं परिमाणं, कार्यस्य त्र्यस्राद्याकारे जातेऽपि न विनश्यति। तस्मान्नास्ति कार्यकारणगुणयोरितरेतरबाधः। सन्निकृष्टगुणेषु तु विशेषनियमः। यदा कार्यरूपेण परिणतास्तदा कारणरूपेण नावतिष्ठन्ते। स्वरूपाद्धीयन्ते। यदा कारणस्वरूपेणावतिष्ठन्ते तदा कार्यरूपेण न सम्भवन्तीति कार्यकारणयोर्विरोधः।

कथं तदुच्यते—रूपरसगन्धस्पर्शाश्चत्वारो गुणाः संस्कारात्मकाः सान्निकृष्टा उक्ताः। स च संस्कार आकाशोदधौ केवल क्रियापवर्गमात्रो वृत्त्यात्मा तरङ्गो न कर्मपक्षे न्यस्तुं शक्य एकद्रव्यत्वात् कर्मणः। यथोपलप्रक्षेपाज्जले परितो वृत्ताकारास्तरङ्गाः प्रसरन्तो दृश्यन्ते, तत्र जलावयवेषूच्चावचरूपा क्रियैवावयवादवय-

---

१. Undulatory Properties—colour. taste, smell, touch and sound. २. Non-undulatory properties—quantity, magnitude etc.

वान्तरं संतन्वाना विद्यते। न कृत्स्नमेवावयविभूतं जलं देशाद्देशान्तरं प्राप्नोति। द्रव्येष्वेवंविधः कम्परूपेण क्रियासन्तानः[1] संस्कार उच्यते।

तस्य संस्कारस्याधिष्ठानगत्याकृतिजातिरिति चत्वारो विशेषा विज्ञायन्ते। तत्राधिष्ठानं[2] नाम संस्काराणामाश्रयः। गतिः[3] प्रतिक्षणं कम्पसंख्या। आकृतिः[4] परिमाणेयत्ता, कम्पस्यौच्चयविस्तारविशिष्ट स्त्र्यस्रचतुरस्राद्याकारः। जातिर्युद्भवः[5]। यथा रूपसंस्कारास्तैजसाः समानाकारा सजातीयाः। एवं रससंस्काराः परस्परं सजातीया समानाकाराः रूपसंस्कारेभ्यो भिन्नाकारा विजातीयाश्चेत्येवमादि। सजातीयाः समानाकारा अपि संस्कारा गतिविशेषान्महदल्पव्यवस्थया परस्परेण विशिष्यन्ते। अयमत्र विज्ञायते नियमः। गतिव्युत्क्रमेणैषां[6] विस्तारविशेषा जायन्ते। यथायथा तीव्रा गतिस्तथातथा संस्कारविस्तारापकर्षः। यथायथा च गत्यपकर्षस्तथातथा महानस्य विस्तारः। एवं गतिवचनेनैव विस्तारस्यापि गतार्थत्वादविभागेन ग्रहणम्।

यथा परमाणूनां परस्परधारणाकर्षणरूपः संयोग उक्तस्तथा

१. Wave-Motion. २. Source of wave. ३. Wave-frequency. (Including other dependant features of the wave viz. Length and Amptitude etc.) ४. Shape of wave (conical, bowlike etc.) ५. Origin of the wave. (See Com. 10,1,7). ६. Wave-length and Frequency are inversely proportional.

संस्काराणां संयोगः सन्निकर्ष[1] उच्यते। तत्र सजातीयानां समानाकाराणामेव सन्निकर्षो भवति न विजातीयानामाकारभेदादिति। सजातीयेष्वपि येषां गतिविस्तारसाम्यं भवति ते सवर्णा[2] उच्यन्ते। तेषां सन्निकर्षे नास्ति विशेषनिष्पत्तिः तुल्यत्वादपकर्षोत्कर्षयोरसंभवात्। असवर्णानां सन्निकर्षे तु स्वल्पेन महान् संस्कारोऽपकृष्यते। अल्पश्च महतोत्कृष्यते। तेनोभयगतिमध्यपाती एक एव संस्कार उभयविशिष्टो निष्पद्यते। त्रिभवादाकाशाव्यवधानात् चैते संश्लेषात् द्विसरत्रिसररज्जुवदेकत्वेन घटिता स्वरूपाद्धीयन्ते। कार्यनाशे पुनः स्वरूपमेव प्रतिपद्यन्ते। तस्मादुक्तं कार्यगुणः कारणगुणान् बधति। कारणगुणाश्च कार्यं बधन्ति।

कर्मणां ततोऽपि विशेषमाह—

## कार्याविरोधि कर्म ॥१४॥

कारणकर्मणां कार्यं कर्माविरोधि भवति। सर्वथा भक्त्याभावात् कर्मणां संयोगे ऐकात्म्यरूपसामरस्यात् सर्वथा पार्थक्याभावात् पुनः कारणरूपेण प्रतिलम्भासम्भवः। यथा जले निक्षिप्तं जलमैकात्म्यमिव प्राप्तं न तत्त्वतः पुनरुद्धर्तुं शक्यं तथा कार्याविरोधि कर्मोक्तम्।

द्रव्यगुणकर्मणामेकैकस्य सजातीयारम्भकत्वमुक्तम्। द्रव्यादित्रयाणां विजातीयानामेककार्यारम्भकत्वं वक्तव्यम्। तदर्थमादावेषां

---

१. Composition or coupling of the waves.
२. Resonant.

लक्षणान्यपेक्षितानीत्यादौ द्रव्यलक्षणमुच्यते ।

**क्रियागुणवत्समवायिकारणमिति[1] द्रव्यलक्षणम् ॥१५॥**

क्रियावत्त्वं, गुणवत्त्वं, समवायिकारणत्वं चेति त्रयो धर्मा गुणादिपंचपदार्थेभ्यो द्रव्यं व्यावर्तयन्ति । यत्रैते धर्मा साहचर्येण विद्यन्ते स पदार्थो द्रव्यम् ।

अत्र क्रियाकर्मणो परस्परेण विशेषः । एकद्रव्यं कर्मोक्तम् । तच्च चलनात्मकं दृश्यते । स्थिरावस्थे द्रव्ये नास्ति कर्म । तत्रातिव्याप्तिवारणाय क्रियावत्त्वमुक्तं न कर्मवत्त्वमिति । क्रियायाः स्थिरास्थिरेषु नित्यं विद्यमानत्वात् । स्थित्यवस्थेऽकर्मवत्यपि द्रव्येऽवक्षेपणभ्रमणादिपरमाणुकर्मणां नित्यं व्याप्रियमाणत्वादकर्मवतोऽपि क्रियावत्त्वं नित्यम् । न च परमाणावव्याप्तिरिति वाच्यम् । कर्मणः क्रियायां समावेशादिति । तेनाकर्मवदपि क्रियावद् भवति द्रव्यम् । नाक्रियं द्रव्यं कर्मवत्सम्भवति । गुणवच्च द्रव्यं दृष्टमिति गुणवत्त्वमुक्तम् ।

समवायिकारणमिति । कर्मगुणानां द्रव्येण नित्यः सम्बन्धो विद्यते । तत्र द्रव्यमाश्रयस्तदाऽश्रिता कर्मगुणा अवतिष्ठन्ते यस्मादाश्रयत्वेन द्रव्यं कर्मगुणान् विनिगृह्य स्वस्मिन् समवाययति तस्मात् समवाय्युच्यते[2] । तदाश्रिताः कर्मगुणाश्चास्मिन् समवेता उच्यन्ते ।

ये च द्रव्ये समवेतानां कर्मगुणानां विशेषास्तेऽपि स्वसामान्या-

१. The Central cause—Nucleus. २. Nucleus.

नामाश्रयं साक्षाद् द्रव्यमेव समवयन्ति। न स्वकारणान् कर्मगुणानिति तेषामपि द्रव्यं समवायिकारणं भवतीति द्रव्यस्यैव समवायिकारणत्वमुक्तम्[1] न गुणकर्मणामिति। द्रव्येण गुणकर्मणां सम्बन्धस्त्वौत्पत्तिकः नायममिश्रितानां मिश्रणेन जात इति नायं कृतकः सम्बन्धः। अयुतसिद्धत्वादयं समवायसम्बन्धो नित्यश्चोक्तः।

द्रव्याणामपि द्रव्यमेव समवायिकारणं भवति पृथिवीप्रभृतयश्चतुर्विधा भूतपरमाणवः सम्भूय समूहरूपेण परिणता कार्यं भवति। तच्च कार्यं नानाधर्मकं विद्यते। न च परमाणूनां यादृच्छिकप्रचयमात्रेण कार्येषु धर्मनानात्वनियम उपपद्यते। दृष्टः खलु नियमः। तेन समूहभूते कार्ये परमाणूनां दिग्देशविशिष्टः सन्निवेशविशेषो धर्मनानात्वहेतुरस्तीति नियम उपलभ्यते। हेत्वन्तरानुपपत्तेः। स च दिग्देशविशिष्टः सन्निवेशः कंचिद् ध्रुवमपेक्ष्यैव सम्भवति। तस्मादस्ति कार्ये कश्चिदणुविशेषो यमाश्रित्यान्येऽणवो दिग्देशनियोगेनावतिष्ठन्ते। सोऽणुः कार्ये समवाय्युच्यते। अन्ये तदाश्रितास्तेन धारणाकर्षणाभ्यां विनिगृह्य स्वशासनेऽवस्थापिता संयोगिन उच्यन्ते।

अत्रापि कारणानां कार्येणौत्पत्तिकः सम्बन्धः। यद्यप्यमिश्रितानां कारणानां मिश्रणेन तेषां युत्या सम्बन्धस्तथापि कार्येण पुनः कारणानां युतिर्नोपपद्यते। तस्मादयुतसिद्धोऽयमपि कार्य

१. Only the matter can be a Nucleous and not the property or the force.

कारणसम्बन्धो द्रव्यसमवायः । अत्राप्याश्रयभूतोऽणुरन्यान् संयोगिनोऽणून् विनिगृह्य स्वस्मिन् समवाययतीति समवायुच्यते । कार्यानित्यत्वादनित्योऽयं द्रव्यसमवायः । तस्माद् द्रव्यादीनां-त्रयाणामपि द्रव्यमेव समवायिकारणमुक्तम् ।

गुणलक्षणमाह—

**द्रव्याश्रय्यगुणवान् संयोगविभागेष्वनपेक्ष इति गुणलक्षणम् ॥१६॥**

द्रव्यमाश्रयो यस्य सः द्रव्यसमवायिकारणकोगुणः । कृत व्याख्यानमेतत् । कार्यगुणानामपि द्रव्यमेवाश्रयो न गुणस्तेना-गुणवान् गुण इत्यपि व्याख्यातम् ।

ननु संयोगस्य गुणस्य सतः संयोजनकर्माणि कारणत्व-मुक्तम् । **कर्मजः संयोगजश्च संयोगः** (७,२,९) इति । तत्कथं संयोगविभागेषु गुणस्याकारणत्वमिति चेदुच्यते—सान्तराला हि परमाणव आकाशेन व्यवहिता कार्येऽवतिष्ठन्ते । न च परमाणु कर्माण्याकाशे विभवन्ति । तेन परमाणूनां संयोगानुपपत्तिः, कर्म-जत्वात् संयोगस्य । तदर्थं परमाणुषु संयोगो नामाजोगुणोऽभ्युप-गम्यते । स चाकाशे विभवति । तेन परमाणूनां परस्परसम्बन्धः । परमाणुगतं कर्म, संस्काररूपेण संयोगरश्मिद्वारा परमाण्वन्तरे-ष्वपवृक्ते तेन परमाणूनां संयोगो जायते । तत्र योऽयमजः संयोगः परमाणुगुणः स कर्मणामपवर्गे कारणं भवति । न साक्षात् परमाणुसंयोजने । स संयोगस्तु कर्मजन्य एवेत्यत आह संयोग

विभागेष्वकारणं गुण इति ।

अनपेक्षश्च गुणः कारणद्रव्येषु नित्यं विद्यमानः । स्वोत्पत्तौ कारणान्तरानपेक्षोऽजश्चेति । ते चानपेक्षा नित्यद्रव्यवृत्तयो गुणाः सप्तदशैवोद्दिष्टाः । अन्ये गुरुत्वादयः कार्यत्वात्सापेक्षाः । अतो नोद्दिष्टा इत्युक्तं पुरस्तात् ।

कर्मलक्षणमाह—

**एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥१७॥**

एकद्रव्यमाश्रयो यस्येत्येकद्रव्यम् । कोऽयमेक इति । इणो गत्यर्थस्य कन् प्रत्यये रूपम् । एति स्थानात् स्थानान्तरं प्राप्नोतीत्येकः । तच्चैकत्वमेकत्वैकपृथक्त्वसङ्ख्याविशिष्टस्य परिच्छिन्नस्यैव सम्भवति । विभूनामेकपृथक्त्वविशिष्टानां भक्तिरहितानां देशाद् देशान्तरप्राप्तिरूपायनासम्भवात् ।

अन्यदपि, यावदेति व्यापारवद् भवति द्रव्यं तावदेवास्यैकत्वं न स्थिरावस्थस्यैकत्वमिष्टमित्याहैकद्रव्यं कर्मेति । तेन चलनात्मकमेवात्र तन्त्रे कर्माभ्युपगम्यते न क्रिया नापि संस्कारः ।

अगुणं कर्मेति । यद् गुणो नास्तीति गुणाभिन्नं कर्म । गुणस्याप्येकद्रव्याश्रितत्वात् तत्रातिव्याप्तिवारणार्थं वचनम् । तेन संस्कारेष्वव्याप्तिः । अपि च गुणानाश्रितं कर्म, न गुणमाश्रयते नापि गुणेनाश्रीयते कर्मेत्याभिप्रायः । द्रव्यस्यैव गुणकर्मणामाश्रयत्वात् । संयोगविभागेषु जनिष्यमाणेषु केवलं कर्मैव

स्वतन्त्रकारणं, न कारणान्तरमपेक्षते । अजसंयोगस्य कर्मापवर्गमात्रे कारणता न जन्यसंयोगविभागेष्विति ।

द्रव्यगुणकर्मणां सजातीयारम्भकत्वमुक्त्वैषां लक्षणान्यप्युक्तानि । इदानीमेषां विजातीयारम्भकत्वमुच्यते ।

**द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥१८॥**

यत्कारणं कार्यं निष्पाद्य निवर्तते तन्निमित्तकारणं[1]मुक्तम् । यत्तु कारणं यावत् कार्यस्थितिस्तावत् सहैव प्रवर्तते तत् सामान्यकारणं[2]मुच्यत इत्यनयोर्विशेषः । कार्याणां द्रव्यगुणकर्मणां द्रव्यं सामान्यं कारणम् । कार्यसहभावि वर्तत इत्यर्थः ।

**तथा गुणः ॥१९॥**

एवं गुणोऽपि यावत्कार्यस्थितिस्तावत् साहचर्येण विद्यते ।

**संयोगविभागवेगानां कर्म समानम् ॥२०॥**

कारणमिति शेषः । यावत्संयोगस्थितिस्तावत् कर्मणोऽपि प्रवृत्तिः । तेन संसर्गमात्रस्य संयोगत्वं नेष्टं कर्मव्यतिरेकात् । एवं यावद् विभागप्रवृत्तिस्तावत् कर्मापि सहैव प्रवर्तते । निवृत्ते कर्मणि विभागत्वं नेष्टम् । वेगभावनासंस्कारयोः कर्म सामान्यं कारणं सहभावीति व्याख्यातम् ।

**न द्रव्याणां कर्म ॥२१॥**

सामान्यकारणमिति शेषः । कार्ये कारणानामवक्षेपणकर्मणा यत्परस्परधारणाकर्षणे सा क्रिया भवति न कर्म, कार्यस्य स्था-

---

१. Instrumental Cause. २. Co-existant Cause.

यित्वात् । द्रव्यारम्भकं यदादिकर्म तस्य सामान्यकारणत्वं प्रतिषिद्धम् । कस्मात्—

व्यतिरेकात् ॥२२॥

यत्कार्यं निष्पाद्य निवर्तते तस्य कर्मणो निमित्तकारणत्वमुक्तम् । न सामान्यकारणत्वं कार्ये ।

इतः परमाह्निकसमाप्तिपर्यन्तं द्रव्यगुणकर्मणां सामान्यमेकं कार्यमुच्यते—

**द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥२३॥**

बहूनां कारणानां यदेकं कार्यं तत्तेषां सामान्यकार्यमुक्तम् । बहुभिः कारणद्रव्यैरेकं सामान्यं कार्यद्रव्यमारभ्यते एवं बहुभिर्गुणैः सन्निकृष्टैरेकः सामान्यः कार्यगुण आरभ्यते ।

**गुणवैधर्म्यान्न कर्मणां कर्म ॥२४॥**

सामान्यकार्यं कर्म न भवतीति शेषः । कार्यकर्मणः कारणेभ्योऽविशेषात्कर्मान्तरत्वप्रतिषेधस्तूक्तः । भक्त्याभावात्कर्मणामैकात्म्यात् कार्यस्याविशेषो व्याख्यातः । तस्मात् कर्मभिर्न सामान्यं कर्मान्तरमारभ्यते ।

**द्वित्वप्रभृतयः संङ्ख्याः पृथक्त्वसंयोगविभागाश्च ॥२५॥**

बहूनां द्रव्याणामेते सम्भवन्ति नैकस्येति द्रव्याणां सामान्यकार्याणि ।

**असमवायात्सामान्यकार्यं कर्म न विद्यते ॥२६॥**

बहुकर्मणामेकं सामान्यकार्यं कर्म न विद्यते, तदुपपाद-

यति असमवायादिति । कार्ये दिग्देशविशिष्टावस्थानरूपसमवायस्तु मूर्तानामेव सम्भवति न कर्मणां तदाहुः—'वृत्त्यात्मानः परस्परेण विरुध्यन्ते, रूपात्मानस्तु सामान्यैः सह प्रवर्तन्ते' इति ।

**संयोगानां द्रव्यम् ॥२७॥**

सामान्यं कार्यं भवतीति शेषः । कारणबहुत्वात्संयोगबहुत्वमुक्तम् ।

**रूपाणां रूपम् ॥२८॥**

रूपशब्देन संस्कारात्मका रसगन्धस्पर्शा गुणा उपलक्षिताः । तेषां बहूनां रूपसंस्काराणामेको रूपसंस्कारः कार्यम् । एवं रसादीनामपि द्रष्टव्यम् ।

**गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥२९॥**

एकं समानं कार्यमिति शेषः । यावदुत्क्षेपणं प्रवर्तते तावद् गुरुत्वादयोऽपि सहैव प्रवर्तन्ते । प्रयत्नः कर्ममात्रोपलक्षकः । तस्यग्रहणेन च कार्यद्रव्योत्क्षेपणमेव विवक्षितं गम्यते । परमाणोरुत्क्षेपणस्य प्रयत्नेनाशक्यत्वात्संयोगस्य च तत्र सामान्यकारणत्वानुपपत्तेः ।

यदा लोष्टादूर्ध्वमुत्क्षिप्यते तदास्योत्क्षेपणे त्रीण्येव सामान्यकारणानि भवन्ति । प्रयत्नप्रयुक्तं कर्म, तद्विरोधि गुरुत्वजन्यमवक्षेपकं कर्म, कर्मापवर्गहेतुभूता अवयवसंयोगाश्चेति । तत्र विरोधिगुरुत्वेन हीयमानः प्रयत्नः काञ्चित् काष्ठामासाद्य नश्यतीत्युत्क्षेपणाभावः । ततोऽवक्षेपणारम्भः । तच्चावक्षेपणं गुरुत्व-

संयोगानां सामान्यं कार्यमिति ।

**संयोगविभागाश्च कर्मणाम् ॥३०॥**

जन्यसंयोगो जन्यविभागश्चकाराद् वेगो भावना चेत्येते कर्मणां सामान्यकार्याणि कर्मनिवृत्तौ निवर्तन्त इति । उपसंहरति—

**कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥३१॥**

उक्तपूर्वमेतत् । अयमत्र विशेषः । वेगभावनादिगुणाः कर्मणां सामान्यकार्याणि भवन्त्येव, किन्तु द्रव्यकर्मणी कर्मणां सामान्यकार्यं न सम्भवत इत्यनुवादमात्रं सूत्रम् ।

इति प्रथमे प्रथमाह्निकम् ।

## अथ प्रथमाध्याये द्वितीयाह्निकम्

द्रव्यादिषट्पदार्थेषु द्रव्यादित्रयाणां सदात्मकत्वात्तेष्वेव परिणामसम्भवस्ततश्च कार्यकारणभावः । तेषां सजातीयारम्भकत्वं विजातीयारम्भकत्वञ्चोक्तं प्रथमाह्निके । क्रमप्राप्तौ सामान्यविशेषौ परीक्षणीयौ । तयोरसदात्मकत्वादपरिणामित्वादसत्कार्यासम्भवाच्च नास्ति कार्यकारणभाव इतीदानीं परीक्ष्यते । तत्रादौ कार्यकारणव्यवस्थामाह—

**कारणाभावात्कार्याभावः ॥१॥**

यः कश्चिज्जन्योऽर्थस्तत्कार्यं जन्यत्वात्। तस्य कारणेनावश्यं भवितव्यमिति सर्वतन्त्रसिद्धान्तः। किञ्च—

## न तु कार्याभावात्कारणाभावः ॥२॥

कार्याभावेऽपि कारणं तु तिष्ठत्येव। इह सत्कार्ये कारणानि परमाणवः कचित् कार्यं जनयन्ति कचिन्न जनयन्ति। यदा न जनयन्ति कार्यं तदापि सन्त्येवेति नोपपद्यते कार्याभावे कारणाभावः। सन्ति ह्यत्र भावा येषां कारणं तु भवति किंतु कार्यं न सम्भवति। के त इत्याह—

## सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥३॥

द्विविधा भावा भवन्ति। वस्तुस्वरूपाः सदात्मकाः। वस्तु स्वरूपशून्या निरुपाख्या केवलं बुद्ध्यपेक्षा ज्ञानमात्रा असदात्मकाः। यथा गौरित्युक्ते त्रयो भावा गम्यन्ते। गौरिति शब्दः। गौरिति लोके विद्यमानं सद् वस्तु चतुष्पात्सत्त्वविशेषः। गौरिति ज्ञानमात्रम्। अत्र शब्दो भावः। सत्त्वविशेषोऽर्थोऽपि भावो ज्ञानमपि भावोऽस्तीति प्रत्ययसामान्यात्।

अथ सत्यमित्युक्ते, सत्यमिति शब्दो भावः। सत्यमिति ज्ञानं भावः। किन्तु सत्यमिति लोके स्वरूपतो नास्ति कश्चित्सकल्पोऽर्थः। तदिदं शब्दज्ञानानुपाति सत्ताशून्यं विकल्पज्ञानमसत्पदार्थः। पदार्थत्वं त्वस्याभिधेयत्वाज्ज्ञेयत्वाच्च निर्विवादमेव। तेनान्यो भावोऽन्या च सत्ता। सर्वाऽपि सत्ता भावः। किन्तु सर्वोऽपि भावो नास्ति सत्ता।

एवंविधौ सामान्यविशेषावत्र पदार्थत्वेनाभ्युपगतौ, केवलं बुद्ध्यपेक्षौ भावमात्रौ सत्ताशून्याविति। यत्तु कार्यकारणसामान्ये सामान्यशब्दः स सत्तावाचीति भिन्नार्थः। एवं तत्त्वपरिणामे विशेषशब्दः परमाणुवाचीति भिन्नार्थ इति ध्येयम्। भावमात्रत्वादसदात्मकत्वात् केवलविवर्तमात्रौ सामान्यविशेषावनयोर्नास्ति परिणामस्ततश्च कार्याभावोऽसत्कार्यासम्भवात्।

ननु सामान्यबुद्धिर्जायते विशेषबुद्धिर्जायत इति सामान्यविशेषयोर्जन्यत्वात्कार्यत्वमुपपद्येत इति। बाढमस्त्यनयोः कार्यत्वं किन्त्वर्थारम्भे कारणत्वं नास्ति। सामान्यविशेषज्ञाननिष्पत्तेर्द्रव्यगुणकर्माण्येव कारणानि न सामान्यविशेषौ। तथा च वक्ष्यति सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् (८,१,५) इति। तस्मात्—

**भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥४॥**

अस्तीति प्रत्ययस्य सर्वत्रानुवृत्तेः सामान्यमेव भावो नास्त्यस्य विशेषः। कानि तत्र नित्यसामान्यानि ?

**द्रव्यत्वं, गुणत्वं, कर्मत्वं च सामान्यानि विशेषाश्च ॥५॥**

द्रव्यं सत, द्रव्यत्वं तु भावमात्रं, गुणः सन् गुणत्वं तु भावमात्रं, कर्म सत् कर्मत्वं तु भावमात्रं, सामान्यं भावो विशेषश्च भाव इत्येते भावमात्रत्वात् सामान्यान्येवेत्येषां विशेषा न भवन्ति।

**अन्यत्रान्तेभ्यो विशेषेभ्यः ॥६॥**

द्रव्यगुणकर्मसु साधर्म्यात् समाना बुद्धिर्जायते तत्सामा-

न्यम्। तेषु वैधर्म्याद् विशेषबुद्धिरुत्पद्यते स विशेषः। विशेषेषु पुनः साधर्म्यात् सामान्यबुद्धिर्भवति। वैधर्म्याच्च विशेषबुद्धिः। एवं परस्परापेक्षौ सामान्यविशेषौ। तत्र यदादिसामान्यं तत्सामान्यमेव। येऽन्त्या विशेषा न तेषु सामान्यबुद्धिर्भवति। तेषां पुनर्विशेषाभावात्। ते विशेषा एव न सामान्यानि। के तेऽन्त्यविशेषा इत्युच्यते—

अन्त्यविशेषाः परमाणव उच्यन्ते। इदमत्राकूतम्। तत्त्वपरिणामे कारणकार्यपरम्पराक्रमेण तत्त्वप्रसङ्ख्यानमुक्तम्। तत्र कारणं सामान्यं कार्यञ्चास्य विशेषः। इह तत्त्वपरिणामे परमाणवोऽन्त्या विशेषा भवन्ति तेभ्यस्तत्त्वान्तरानुत्पत्तेस्तेषां पुनर्विशेषाभावात्।

वैशेषिके नये तु प्रत्यक्षलैङ्गिकाभ्यां कार्यात्कारणं प्रतिपद्यते। अत्र कार्यं सामान्यं, कारणानि चास्य विशेषा इति विपरीतः क्रमः। किंत्विहापि कार्यकारणपरम्परया परमाणव एवान्त्यविशेषाः प्राप्नुवन्ति। तेषां पुनः कारणानभ्युपगमादिति। तस्माद् द्रव्येषु परमाणवोऽन्त्या विशेषा विशेषा एव भवन्ति न सामान्यानि। एवं गुणकर्मणां तद्गतगुणकर्माणि अन्त्या विशेषा बोध्याः।

**सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥७॥**

असदात्मकेषु अस्तीति प्रत्ययो भावः। सदात्मकेषु तु अस्ति सदिति वास्तविकं किञ्चित्तत्त्वं प्रतीयते। तत् सत्। तस्य भावः

सत्ता। सत्तासम्बन्धाद् द्रव्यगुणकर्मसु सदिति प्रत्ययो भवति।

**द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥८॥**

द्रव्यं सत्। न द्रव्यं सत्ता। गुणः सन्, न गुणः सत्ता। एवं कर्मणि सदिति प्रत्ययो भवति। न कर्म सत्ता भवति। अन्यदेव सत्। अन्या च सतो भावः सत्तेति निरुपाख्यं तत्त्वम्।

**गुणकर्मसु च भावान्न कर्म न गुणः ॥९॥**

यथा द्रव्ये सत्ता वर्तते न द्रव्यं सत्तेति द्रव्यसत्तयोरर्थान्तरत्वमेवं गुणकर्मसु विद्यमाना सत्ता ताभ्यामर्थान्तरमिति।

**सामान्यविशेषाभावेन च ॥१०॥**

द्रव्यगुणकर्माणि सामान्यानि विशेषाश्च भवन्ति सत्तायां तु सामान्यविशेषाभावस्तस्मादप्यर्थान्तरं सत्ता।

**अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥११॥**

द्रव्याणां बहुत्वाद् द्रव्यत्वशब्देन द्रव्यजातिग्रहणादनेकद्रव्य समूहेऽपि द्रव्यत्वशब्दः। यत्र तु द्रव्यस्य भावो द्रव्यत्वमिति भावार्थो द्रव्यत्वशब्दस्तत्र जातिग्रहणं नास्ति। अन्यैव जातिरन्यश्च भावः। यथाकाशस्यैकत्वान्नास्ति जातावाकाशत्वशब्दो भावमात्रे त्वस्ति।

**सामान्यविशेषाभावेन च ॥१२॥**

तेन यत्र द्रव्ये जातौ नास्ति द्रव्यत्वशब्दस्तत्र भावमात्रे द्रष्टव्यः। भावस्य सामान्यविशेषाभावादिति।

**तथा गुणेषु भावाद् गुणत्वमुक्तम् ॥१३॥**

द्रव्यवद् गुणजातौ बहुगुणेषु गुणत्वशब्दः ।

**सामान्यविशेषाभावेन च ॥१४॥**

गुणभावेऽपि गुणत्वशब्दः ।

**कर्मसु भावात्कर्मत्वमुक्तम् ॥१५॥**

बहुषु कर्मसु सामान्यविशेषेष्वपि जातौ कर्मत्वशब्दो भवतीति ।

**सामान्यविशेषाभावेन च ॥१६॥**

केवलकर्मभावमात्रेऽपि कर्मत्वशब्दः ।

**सदिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भावः ॥१७॥**

सतो भावः सत्ता । तत्रापि सदित्यस्तिमात्रप्रत्ययादविशेषः । पुनर्नापि भावे लिङ्गान्तरं विशेषकं विद्यते तस्मादेका सत्ता भावमात्रत्वादिति ।

अयमत्र विवेकः । निरुपाख्येष्वस्तीतिमात्रप्रत्ययो भावः । अस्ति किञ्चिद्वस्तुभूतं तत्त्वमिति भावेन सह सत्ताऽपि विज्ञायते । तेनास्ति निःसत्तो भावः। किं तु निर्भावा सत्ता नोपपद्यते ।

**इति प्रथमे द्वितीयाह्निकम् ।**



## अथ द्वितीयाध्याये प्रथमाह्निकम्

इतः परं तृतीयाध्यायान्तं द्रव्यस्वरूपपरीक्षोपक्रम्यते । तत्र पृथिव्यादिदिगन्तानां सप्तानां परीक्षा द्वितीयाध्यायविषयः ।

## रूपरसगन्धस्पर्शवती पृथिवी ॥१॥

परमार्थतस्तु सदकारणवन्नित्यमिति प्रधानस्यैव पारमार्थिकी नित्यतोक्ता। तत्कार्यस्य परमाणोर्न तादृशी नित्यतानुज्ञातुं शक्या तथाप्यनुशासनार्थं सन्दिग्धार्थेषु व्यभिचारवारणाय यथोद्देशं संज्ञापरिभाषं विहितं शास्त्रे। अस्मिन्तन्त्रे परमाणोः पारिणामिकं नित्यत्वमभ्युपगम्य शास्त्रमुपक्रान्तम्।

एवं द्रवत्वशब्दः सन्दिग्धार्थो व्यापकत्वादित्युपपरीक्षणीयः सर्वमेव द्रव्यं द्रवं भवति क्रियावत्त्वात्।

आत्मा द्रवो ज्ञानक्रियावत्त्वात्। मनो द्रवं संस्कारवत्त्वात्। दिक्कालौ द्रवौ आधारत्वेन सम्बन्धात् क्रियाऽप्रतिबन्धकत्वाच्च। आकाशं द्रवं शब्दसंस्कारवत्त्वात्। परमाणुर्द्रव आकुञ्चन-प्रसारणवत्त्वात्। एवं सर्वं कार्यद्रव्यमपि द्रवं क्रियावत्त्वादिति।

तद् द्रवत्वमपि भक्त्यभावात्तारतम्याच्च व्यवस्थामपेक्षते। तत्र यत्र कार्यद्रव्येऽवयवानां दृढसंहत्या नियतमूर्तिसान्निवेशो विद्यते सोऽवयवानां दृढसंयोगः संघात उच्यते। यथा काष्ठ-पाषाणसुवर्णादिषु संघातेषु दृढबन्धान्नियतमूर्तिसन्निवेशः।

यत्तु जलादिषु नियतमूर्तिसन्निवेशाभावहेतुः शिथिलः संयोगः स इह तान्त्रिकं द्रवत्वं गृह्यते। तच्च द्विविधं, यत्र तु संयोगशैथि-ल्येऽपि अवयवाः परस्परेण श्लिष्यन्तोऽवतिष्ठन्ते स संयोगः स्नेहः। यत्र धूमादिषु त्ववयवेषु स्नेहाभावात् स्वातन्त्र्येणावयवा अवतिष्ठन्ते तद् द्रवत्वमात्रम्।

तत्रेमं संयोगमपेक्ष्य त्र्यवस्थमेव सांसिद्धिकं कार्यजातमुपलभ्यते। काष्ठपाषाणादिमूर्तिविशिष्टं संहतं द्रव्यम्। जलादि स्यन्दनशीलमनियतमूर्ति द्रवं स्निग्धं च द्रव्यम्। अग्निज्वालाद्यूर्ध्वज्वलनशीलं द्रव्यं द्रवमस्निग्धञ्च। एवं वायुर्धूमादि तिर्यक्पवनशीलञ्च द्रव्यं द्रवं रूक्षञ्च।

तत्र यद्यद् द्रव्यं रूपरसगन्धस्पर्शवत् संहतं च तस्य सर्वस्य कार्यपृथिव्यामन्तर्भावः।

**रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥२॥**

यावन्मात्रं कार्यद्रव्यमिह गन्धवर्जं रूपरसस्पर्शवद् द्रवं स्निग्धं च दृष्टं तत्सर्वमपां कार्यम्। एतेन पृथिव्यां द्रवत्वस्नेहप्रतिषेधः संघातत्वं चोक्तं भवति।

**तेजो रूपस्पर्शवत् ॥३॥**

रसगन्धवर्जितं रूपस्पर्शवद् द्रवं च द्रव्यं तेजःकार्यं बोधव्यम।

**स्पर्शवान् वायुः ॥४॥**

रूपरसगन्धराहितं, स्पर्शवद् द्रवं च द्रव्यं लोके दृष्टं वायुकार्यम्।

**त आकाशे न विद्यन्ते ॥५॥**

त इति सर्वनाम्ना रूपरसगन्धस्पर्शाः संज्ञाभूताः परामृश्यन्ते न द्रवत्वं, तस्येह विशेषणत्वेन प्रयुक्तत्वात्। तेनाकाशस्य द्रवत्वं तु न प्रतिषिध्यते। तेन रूपरसगन्धस्पर्शहीनमपि सद् द्रवमाकाशम्। नेदमाकाशस्वरूपावधारणार्थं लक्षणसूत्रम्। पृथिव्यादिचतुर्भ्योऽस्य व्यतिरेकप्रतिपादनार्थमिति। आकाशसाधनं तु

वक्ष्यमाणम् ।

जलहिमकरकादिषु अप्सु द्रवत्वव्यभिचारदर्शनाद् व्यवस्थामाह—

**सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ॥६॥**

लोके यथावस्थितानां द्रव्याणां स्वभावसिद्धं द्रवत्वमिहाबादीनां लक्षणत्वेन ग्राह्यम् । यत्तु संहतेष्वग्निसंयोगाद् द्रवत्वं जायते तन्नैमित्तिकं द्रवत्वं यद्यपि द्रवत्वमेव तथापि नैमित्तिकत्वान्न सांसिद्धिकम् । तस्मादलक्षणमबादीनाम् ।

तच्च नैमित्तिकं द्रवत्वं पाकद्रव्येषु, स्वरूपेषु धातुषु चाद्भिः समानं दृष्टम् । तथा हि सर्पिरिति घृतादिमूलद्रव्याणां पाकजानां गणविशेषः । जतुवृक्षलतागुल्मवनस्पतीनां निर्यासो गणविशेषः । मध्विति वयसां मक्षिकादीनां निर्यासविशेषो मूलवर्गः । उच्छिष्टमिति सिक्थादिकिट्टगणः । एषामग्निसंयोगाद्यद् द्रवत्वं जायते तद्यद्यपि द्रवत्वमेव तथापि नैमित्तिकत्वान्नैषामप्त्वं साधयति ।

**त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ॥७॥**

एवं स्वरूपपार्थिवेषु धातुष्वप्यग्निसंयोगाद्यद् द्रवत्वं जायते तन्नैमित्तिकत्वान्नैषामप्त्वं साधयति । त्रपुषादिधातुगणः । एवं सीसादिगणः । लोहादिगणः । रजतादिगणः । सुवर्णादिगणः । सर्वेषां धातूनां पृथिवीस्वरूपाणामेष्वेव पञ्चवर्गेष्वन्तर्भावः । इति

पञ्चानामेव ग्रहणं न न्यूनाधिकानामिति ध्येयम् ।

एवं तेजःपरमाणुसंयोगादपां वाष्पत्वप्रपत्तिर्नैमित्तिकी नापां वायुत्वं साधयति । निमित्तापाये स्नेहात्पुनरप्त्वप्राप्तेः एवं तेजः-संयोगापाये आपीडनात् संहननात् — हिमकरकादिरूपेणापां संघातो नैमित्तिको नापां पृथिवीत्वं साधयति ।

सोमविशेषाः पीयूषाण्युच्यन्ते । पीयूषसंयुक्तो गुरुत्व-विशिष्टो भूमण्डलस्थो वायुर्नाडयवायुरुच्यते पतनशीलत्वात् । तस्य तेजःसंयोगापाये आपीडनात् संहननाच्च पीयूषाणां संघातो जायते न वायोस्तस्य रूक्षत्वात् । सोऽपि पीयूषसंघातो नैमित्तिकः । न पीयूषाणां पृथिवीत्वं साधयति । द्रवेषु सांद्रता तारतम्यं पृथिव्यणुसंयोगादित्याद्यूहनीयमिति ।

अत्र वायोः पृथिव्यादिभ्यो व्यतिरिक्तद्रव्यत्वं सन्दिग्धं व्यावर्तकलिङ्गाभावादित्याशङ्क्य लिङ्गपरामर्शमाह—

**विषाणी ककुद्वान् प्रान्ते बालधिः सास्नावान् इति गोत्वे दृष्टं लिङ्गम् ॥८॥**

विषाणादीनि चत्वार्यपि लिङ्गानि यत्र सत्त्वे साहचर्येण दृश्यन्ते सः सत्त्वान्तरेभ्यो व्यावृत्तो गौरित्यवधार्यते । विषाणादीनां व्यस्तानामन्यत्र सत्त्वेषु सामान्याददतिव्याप्तेः स्वातन्त्र्येण गोत्वे व्यावर्तकत्वं न सम्भवति ।

**स्पर्शश्च वायोः ॥९॥**

द्रवत्वं स्पर्शश्च वायोर्लिङ्गमुक्तम् । तयोरप्सु तेजसि च

सामान्यादतिव्याप्तेर्वायुव्यावर्तकत्वं नोपपद्यते। तस्माद् योऽयं स्पर्शोऽनुभूयते सोऽप्तेजोनिष्ठ एव स्यान्न द्रव्यान्तरं वायुं लिङ्गयतीति संदिह्यते।

यत्तु कैश्चित् सूत्रे चकारेण समुच्चितः शब्दो वायुलिङ्गमुक्तं भ्रान्तं तत् कुदर्शनमात्रमुत्तानबुद्धीनाम्। शब्दस्य वायुगुणत्वं तु सूत्रकारेण स्वयमेव व्यतिरेकेण निषिद्धम्। तथाहि सूत्रम्— **कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः** (२,१,२५) इति। प्रकृतहान्याऽकृताभ्यागमेन शास्त्रविडम्बनं तु कल्याचार्याणां प्रायेण शीलमेव। तद्धास्यास्पदं हेयं च। वृक्षादीनां कम्पनमपि वायौ लिङ्गं न सम्भवति। आकाशे वायुमण्डले विद्यमानानां पृथिवीरेणूनामाप्यानां वाष्पादिधूमानां पीयूषाणां च संयोगात्तदुपपत्तेः। वायुमण्डले धूम्यासत्त्वे तु गुरुत्वं स्फुटमेव प्रमाणम्।

अथ स्पर्शश्च वायोरिति षष्ठीयोगाद् वायोः स्पर्शविशेषश्चकारेण समुच्चितो गम्यत इति। बाढमेवमेव। सोऽयं वायोः स्पर्शविशेषो विवेचनीयः। तत्राप्सु शीतः सांसिद्धिकः स्पर्शः। तेजसस्तूष्णः स्पर्शः। तद्व्यतिरेकेण योऽयं शीतोष्णः स्पर्शोऽनुभूयते स पृथिव्यां क्वचिदुपलभ्यते। सोऽपि सांसिद्धिको नास्ति, क्वचिच्छीतः क्वचिच्चोष्णः। तेजःसंयोगादुष्णस्तदभावेऽपां संयोगाद्वा शीत इत्यौपचारिको नैमित्तिकश्चेति नायमनुष्णाशीतोऽपि तु शीतोष्णः। ननु नाड्यवायुपक्षेऽप्येवमेव

प्रसङ्गः । तत्र धूम्यायोगात् संदिग्धत्वं स्पर्शस्येति चेन्न, युक्तिसम्भवान्निपुणतरपरीक्षणात्पृथिव्यादित्रयाणां स्पर्शाद्विलक्षणोऽनुष्णाशीतः स्पर्श उपलभ्यते वायौ । एवं च पृथिव्यादित्रिषु सांसिद्धिकानुष्णाशीतस्पर्शानुपपत्तेरयं स्पर्शो वायोर्विशेषगुणोऽपि वैशेषिकोऽपीत्यपि चकारशब्दार्थो घटते ।

**न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥१०॥**

अन्यच्च । योऽयं विद्युत्स्पर्शस्तीक्ष्णोऽनुष्णाशीतश्चोपलभ्यते नासौ तेजस्पर्शोऽनुष्णत्वात् । नापामशीतत्वान्नापि पृथिव्या अव्यभिचारादनपेक्षत्वाच्च । सोऽयमुपलभ्यमानः सांसिद्धिको अनुष्णाशीतस्पर्शो यत्राश्रितः स वायुरिति ब्रूमः । अत्र लिङ्गमात्रं दृष्टं लिङ्गी त्वदृष्टो वायुरिति लिङ्गलिङ्गिनोः सम्बन्धस्यादर्शनात्कस्येदमिति सन्देहे वायोरेवायमित्युपरिष्टाद् वक्ष्यते ।

उक्तं कार्यद्रव्याणां स्वरूपम् । नियमश्च कृतो यन्मात्रद्रव्यं रूपरसगन्धस्पर्शवत् संहतं मूर्तिमच्च तस्य सर्वस्य पृथिव्यामन्तर्भाव इति । एवमप्तेजोवायूनां च व्यवस्था कृता । किं तु नैतावता नियमोऽवकल्पते व्यभिचारदर्शनात् ।

सन्ति ह्यत्र द्रव्याणि यत्र लक्षणसामान्यात् पृथिवित्वमप्त्वं चेत्युभयं युगपत् समभिप्लवते । तथाहि तैलं रूपरसस्पर्शवत्त्वसामान्येऽपि गन्धवत्त्वविशेषात् पृथिवीति प्रसज्जते । स्नेहद्रवत्वविशेषाच्चाप्स्वन्तर्भूतमिति न पृथिवी तैलमिति व्यभिचारापत्तौ व्यवस्थामाह—

## अद्रव्यवत्त्वेन द्रव्यम् ॥११॥

संयुक्तयोरन्योऽन्यस्य द्रव्यवत्त्वं प्राप्तम्। तच्च द्विधा भवति। यत्राश्रयाश्रयिभावेन संयोगः स समवायः। तत्र समवायी प्रधानं, स हि नेता भवति समवायस्य। यथा धातुर्भवति प्रकृतिः शब्दस्य, प्रत्ययास्तु तदधीनत्वात् प्रकृत्यर्थमेव विशेषयन्ति। एवं प्रकृतिभूतस्य समवायिनो गुणा एव प्रत्ययभूतैः समवेतैर्विशिष्यन्ते। न स्वगुणाः प्रादुष्क्रियन्ते। तस्मात् सर्वोऽपि समवायः समवायिनाम्ना संज्ञायते। तेन पृथिवीप्रकृतिकं द्रव्यं पृथिवीनाम्नैवोच्यते प्राधान्यात्।

आश्रयाश्रयिभावं विनैव यत्र संयोगमात्रेण सम्बन्धस्तत्राप्यन्योन्यस्य द्रव्यवत्त्वं प्राप्तमेत्र, किन्तु सम्बन्धसामान्याद् द्वन्द्वसमासवदुभयोः प्राधान्यान्नैकतरस्य नाम्ना कार्यं संज्ञातुं शक्यते। एवंविधेन संयोगमात्रकृतेन द्रव्यवत्त्वेन निष्पन्नं कार्यं द्रव्यंमिश्रं नैकतरस्य व्यपदेशमर्हति।

यस्मात्पाकजोऽपि संयोग आश्रयाश्रयिभावं विनैव सामान्येन प्रवर्तते। तस्मात् पाकजद्रव्याणि पृथिव्यप्मिश्राणि नैकतरेण व्यपदेशमर्हन्ति।

एवंविधे संयोगे भूयस्त्वात् प्राधान्यं गृह्यते नाश्रयाश्रयिभावादिति भूयस्त्वात्तत्र पार्थिवमाप्यं वेति व्यपदेशविशेषो भवति

१. Simple combination, mixture. २. Chemical combination.

न पृथिव्यापो वेति। तेन कार्ये स्वरूपावस्थे द्रव्य एव पृथिव्यादिव्यपदेशो भवति, न मिश्रेष्विति सूत्रार्थः।

**क्रियावत्त्वाद् गुणवत्त्वाच्च ॥१२॥**

इत्थं समवायसिद्धमद्रव्यवच्छुद्धं क्रियागुणवच्चेति कार्यं द्रव्यमुक्तम्। तेन रूपरसगन्धस्पर्शक्रियावद्द्रव्यान्तरसंयोगवर्जितं शुद्धं च यद् द्रव्यं तत् पृथिवीस्वरूपम्। एवमेवाप्तेजोवायुष्वपि योज्यम्। एतद् भूतानामनित्यं कार्यस्वरूपं स्वरूपशब्देनाभिधीयते।

अथ किमेषां नित्यं सूक्ष्मं कारणरूपमित्याह—

**अद्रव्यत्त्वेन नित्यत्वमुक्तम् ॥१३॥**

नास्ति द्रव्यमाश्रयो यस्य तदद्रव्यम्। सर्वथा द्रव्यान्तरानाश्रितमेकाकि तन्नित्यं द्रव्यारम्भे मूलकारणम्। स परमाणुः[१] भूतानां सूक्ष्मरूपमुच्यते। तदेतत् सूक्ष्मस्वरूपसमुदायो[२] द्रव्यमित्याचार्यः। तेन पृथिवीति संज्ञा सूक्ष्मस्वरूपावस्थायां पृथिव्यामेव गृह्यते। पृथिव्यप्संयोगजमात्रे द्रव्ये तु भूयस्त्वात् पार्थिवमाप्यं वेति संज्ञाव्यवहारो भाक्तः।

योऽयं सांसिद्धिकोऽव्यभिचार्यनुष्णाशीतस्तीक्ष्णश्च स्पर्शविशेषो विद्युत्युपलभ्यते स वायुसत्त्वे लिङ्गमित्युक्तम्। तत्र वायुस्वरूपावधारणार्थं लिङ्गान्तरमाह—

**वायोर्वायुसम्मूर्च्छनं नानात्वलिङ्गम् ॥१४॥**

१. Prime-atome. २. Atom.

पृथिवीं परितश्चतुःषष्टियोजनोच्छ्रितप्रायं धूम्योपसृष्टं वायुमण्डलं नाडयवायुरुच्यते, पतननर्तनावस्कन्दनशीलत्वात्। स च नाडयवायुः प्रवहादिवायुभ्यो भिन्न इति द्रष्टव्यम्। पृथिव्या अपां च तेजःसंयोगोत्कर्षादत्यन्तविलयनात्स्नेहाभावे तदणूनां स्वातन्त्र्येणावस्थानं धूमः। धूमानां समूहो धूम्या। नाडयवायुगतधूम्यासत्वे स्पर्शगुरुत्वोपलब्धिः, तेजःसंयोगापकर्षे आपीडनात्[2] संघाते[3] जाते रूपाद्युपलब्धिश्च प्रमाणम्।

किञ्च, सत्यपि गुरुत्वे द्रवत्वे च धूमानां सांसिद्धिकस्नेहसङ्घाताभावात्पृथिव्यामनवस्थानादाकाशे च सांसिद्धिकारोहणात्तिर्यक्पवनाच्चैषां पृथिवीत्वमप्त्वं वा नोपपद्यते द्रव्यान्तरसंयोगादृते। तेन गम्यते अस्ति पृथिवीं परितः किञ्चिद् गुरुत्वरहितं द्रव्यं येन संयुक्तोऽन्तरिक्षेऽवतिष्ठमानो नाडयवायुँस्तदनुविधानेन पतननर्तनावस्कन्दनादिनानाव्यापारवान् उपपद्यते स वायुँरिति ब्रूमः। तदिदं धूम्यानानात्वं वायूनां परस्परसंमूर्च्छनं नानात्वञ्च लिङ्गयति। कारणान्तरानुपपत्तेः।

अत्रेदं तत्त्वम्। पृथिव्यादिवाय्वन्तेषु यः संयोगो नाम गुण उक्तः स सजातीयेषु परमोत्कृष्ट उक्तः। पृथिव्यादिविजातीयानामुत्तरोत्तरं संयोगस्य पारदौर्बल्यं विज्ञायते। अत्र केचित्पृ-

---

१. Atmosphere containing air. २. Compression. ३. Condensation. ४. Trade-Winds. ५. Magnetism in modern Science.

व्यादिभूतेषु मित्रशत्रुसमभावमभ्युपगम्य संयोगतारतम्य[1]मिच्छन्ति तच्चिन्त्यम्। तत्र सजातीयानां यः संयोगस्तत्परस्परेणऽन्योऽन्यस्य निगरणाद् गुरुत्वमु[2]च्यते। यद्यपि संयोगिनोरन्योऽन्यनिगरणं समानलक्षणं, तथापि **समे हीने वाऽप्रवृत्तिरिति** प्रवृत्तिनियमानुरोधादणौ पतनकर्म जायते न महति। तत्र महत्तमो यो द्रव्यसमूहः स भूयस्त्वात् सजातीयानां भूमिर्भवति। पृथिव्यपां महत्तमः समूहोऽयं भूगोलो भूमिर्भवति। तेजसां सूर्यो भूमिर्वायूनां मेरुः। स च वायूनां निगरणाद् गिरिरुच्यते।

तत्र मेरु[3]र्नामभूगोलमध्यात् उदग्दक्षिणास्तिर्यगतो वायुसंस्थानविशेषः। उक्तञ्च—

**अनेकरत्ननिचयो जाम्बुनदमयो गिरिः।**
**भूगोलमध्ये मेरुरुभयत्र विनिर्गतः॥**

(सू. सि. १२,३४) इति।

पृथिवीमध्यादूर्ध्वं प्रसृता वायुरश्मय[4] उत्तरमेरुतो निसृत्य क्रमेण प्रणमन्तो दक्षिणमेरुद्वारेण पृथिवीनाभौ स्वां योनिमभिसम्पद्यन्ते। एवं दक्षिणमेरु[5]तो निसृता रश्मयः प्रणमन्त उत्तरमेरु[6]द्वारेण पृथिवीनाभौ समानपदं प्रत्यासादयन्ति। एवं प्राणापानवदिदं वायुचक्रमनिशं प्रवर्तते। दक्षिणोत्तरनाड्योर्भवतीत्यप्यस्य नाड्यत्वं

---

१. Degree of affinity. २. Gravitation. ३. Magnetic Core of Earth or the Universe. ४. Magnetic flux. ५. South Pole. ६. North Pole.

परस्परसम्मूर्च्छनं च सुवचं प्रतीयते । ते चैते मेरुधर्मा मायिकैश्चुम्बकविज्ञानीय[1]स्थाने बहुशः प्रपञ्चिता द्रष्टव्याः ।

स्वस्वभूम्यौ[2] पृथिव्यादीनां यन् निगरणं तदेषां गुरुत्वम् । तस्मात्तदभिमुखमेषां पतनं भवति । पृथिव्यपामस्मिन् भूगोले गुरुत्वात्पतनम् । पृथिवीतस्तेजसां स्वभूमौ सूर्ये पतनमूर्ध्वज्वलनम् । मेर्वनुविधानेनोत्तरमेरोः सकाशाद् दक्षिणमेरुं दक्षिणाच्चोत्तरमेरुं प्रति मण्डलस्थवायूनां पतनमेषां सांसिद्धिकं तिर्यक्पवनै[3]मुक्तम् ।

सूर्यगत्यनुरोधाद् ऋतुप्रभावात्तेजःसंयोगनिमित्ताद् वायोर्वायुसम्मूर्च्छनाद् वायूनां गतिनानात्वोपपत्तिः ।

**वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥१५॥**

योऽयं विद्युत्युपलभ्यमानोऽनुष्णाशीतस्तीक्ष्णश्च स्पर्शविशेषः स वायोरित्युक्तम् । किन्तु वायोरदृष्टत्वाद् वायुतत्स्पर्शयोः सान्निकर्षस्य चाप्रत्यक्षत्वादाम्नातस्य वायोरेवायं स्पर्श इत्यत्र प्रमाणं नास्ति ।

**सामान्यतोदृष्टाच्चाविशेषः ॥१६॥**

यत्र यत्र दृष्टं वायोः प्रत्यक्षं नास्ति । युक्त्याऽपि तन्न सम्भवतीत्यस्य द्रव्यस्य वायुत्वमाह—

**तस्मादागमिकम् ॥१७॥**

यस्माद् वायुसन्निकर्षे प्रत्यक्षाभावस्तस्मादागमोक्तं तस्य

---

१. Branch dealing with Magnetism. २. Theory of Universal gravitation. ३. Trade winds.

द्रव्यस्य नाम वायुरिति । य एते स्पर्शादयो धर्मा लोके दृश्यन्ते तेषामाश्रयत्वेन हि वायुराम्नायते ।

लोके दृष्टार्थानां नामकरणं तु सन्नियमात्सम्भवत्येव लिङ्गलिङ्गिनोः सन्निकर्षस्य प्रत्यक्षत्वात् । किन्तु यदिदमतीन्द्रियाणामदृष्टार्थानां संज्ञा आम्नायन्ते तत्र को नियम इत्यत आह—

**संज्ञाकर्म[1] त्वस्मद्विशिष्टानां लिङ्गम् ॥१८॥**

शास्त्रे या संज्ञा समाख्याता न ता अस्मद्विधैर्लौकिकैः कृताः । ते संज्ञाकर्तारोऽस्मद्विशिष्टाः साक्षात्कृतधर्माण आसन् । तैः परमेण तपसैतान् पदार्थान् साक्षात्कृत्य एताः संज्ञा विज्ञाताः ।

**प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥१९॥**

दृष्टादृष्टार्थानां सर्वा अपि संज्ञा प्रत्यक्षात्प्रवृत्ताः । किन्त्वदृष्टानां संज्ञा अस्मद्विशिष्टानां परमर्षिणामलौकिकप्रत्यक्षात् प्रवृत्ता इति न विप्रतिपादनीयाः । लक्षणैरनुसन्धाय संज्ञासंज्ञिनोः सम्बन्धमवधार्य प्रतिपत्तव्या ।

देशकालनिमित्ताल्लोके प्रयोगप्राचुर्यात्क्वचित्प्रकृतिप्रत्ययानपेक्षमपि अर्थैकदेशेऽर्थविशेषेषु वा शब्दा रूढा जायन्ते । न सा रूढिरिह व्याख्यानायावकल्पते । युगस्थायि हीदं स्मृतिशास्त्रं भवति । स्वरसंस्कारावरुद्धार्था ह्यत्र शब्दाः श्रुतिलिङ्गवाक्यप्रकरणसमाख्यानुरोधाद् उन्नीतार्था याथातथ्येनार्थान् प्रति-

---

१. Nomenclature.

पादयन्ति तस्मान्न रूढ़या यदृच्छया वा स्मृतिवचनं व्याख्येयमिति सर्वत्र स्मरणीयम् ।

उद्दिष्टानां पृथिव्यप्तेजोवायूनां स्वरूपरूपं परीक्षितम्। एषां सूक्ष्मरूपमुपरिष्टात्परीक्षिष्यमाणम् । इदानीं विभुद्रव्यपरीक्षाया-मादौ क्रमप्राप्तमाकाशं परीक्ष्यते । तत्र लिङ्गं विमृशति —

**निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥२०॥**

यदेतदाकाशे पक्ष्यादीनां निष्क्रमणं प्रवेशनं निर्बाधगमनं तदाकाशसत्वे लिङ्गं स्याद् इति चेन्न ।

**तदलिङ्गमेकद्रव्यत्वात्कर्मणः ॥२१॥**

एकद्रव्यवृत्तिकर्मोक्तम् । निष्क्रमणं प्रवेशनं तु कर्मैव। तत्पक्ष्याद्येकद्रव्यनिष्ठमेव न तद्व्यतिरिक्तद्रव्यनिष्ठं, तेन न द्रव्यान्तरमाकाशं गमयतीत्यलिङ्गमाकाशस्य ।

**कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥२२॥**

यद्युच्येत नेह गमनमात्रं कर्म लिङ्गमुच्यते । निष्क्रमण-प्रवेशनाभ्यां गमनगतः संस्कारविशेषोऽत्रापेक्षितः । ऋजुमार्गे गच्छन्नपि प्रकाशाणुराकाशे सव्यापसव्यं दक्षिणोत्तरायनैः किरन् गच्छतीति **किरण** उच्यते । तस्मादेव च **पतङ्गः** पतन् गच्छ-तीति । दक्षिणान्निष्क्रमणमुत्तरस्यां प्रवेशनम् । एवमुत्तराद्दाक्षिणं निष्क्रमणप्रवेशने । तच्चास्याणोः ऋजुमार्गात्पतनं न निर्निमित्तं स्वतः सम्भवतीत्याकाशकृतं हि तद्धेत्वन्तरानुपपत्तेश्चेति निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गमुक्तं न सामान्यगमनमात्रं कर्मेति ।

वाढमेवमेवैतत् । किरणत्वे आकाशो हेतुस्तस्माल्लिङ्गमपि । किन्त्वनुक्लृप्तं नामानुमानिकं हि तत् । प्रसिद्धलिङ्गवैधर्म्यान्नात्र लिङ्गमाकाशस्य भवितुमर्हतीति । प्रसिद्धासंदिग्धेन च लिङ्गेन भवितव्यमिति । तच्च लिङ्गं कार्यद्रव्येषु कारणविशेषानुरोधाच्चतुर्धैव विशिष्यते । संयोगि समवाय्येकार्थसमवायि विरोधि चेति । तत्र पक्ष्यादिगमने आकाशस्य न समवायित्वं न संयोगित्वं नाप्यैकार्थसमवायित्वमनुकल्प्यते ।

अथ क्वचिदाकाशे गमनवतो द्रव्यस्यावरोधदर्शनात् कर्माभावे विरोधिकारणं स्यादाकाश इत्यपि न सम्भवति ।

**संयोगादभावः कर्मणः ॥२३॥**

नहि संयोगाभावे कर्मापवर्गः, न चापवर्गाभावे कर्माभावः । यत्तु आकाशे क्वचिद् गच्छतो द्रव्यस्य कर्माभावो दृश्यते, तदाकाशव्यतिरिक्तवायुसंयोगात् पृथिवीसंयोगाद् गुरुत्वाद् वा सम्भवति नाकाशनिमित्तादित्यन्यदेवाकाशसत्त्वेलिङ्गमन्वेष्टव्यमिति ।

अथ योऽयं श्रोत्रग्रहणो विषयः शब्दः स वृत्त्यात्मकत्वाद् गुणः । स च क्वचिदाश्रितः । तदाश्रयो विवेचनीयः ।

**कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥२४॥**

कारणमत्र समवायिकारणमिति । संस्कारात्मकत्वाद् गुणः शब्दः कृतकत्वात्कार्यं च । तत्र ये कार्येषु गुणा दृश्यन्ते ते समवायिकारणपूर्वका एव भवन्ति । असमवायिगुणसन्निकर्षादु-

त्कृष्यमाणः स कारणगुणो गुणान्तरत्वं प्राप्नोति विशेषादिति । अयं सन्निकृष्टगुणारम्भे व्यापको नियम उक्तः ।

**कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥२५॥**

पृथिव्यप्तेजोवायूनां स्पर्शवतामेकतमस्यापि गुणो नोपपद्यते शब्दः, तत्र नित्यमनुपलब्धेः । अन्यदप्यत्र हेतुरस्ति । यदि शब्दः स्पर्शवतां गुणः स्यात् सन्निकर्षात्कार्यशब्दः शब्दान्तरत्वेनोपलभ्येत रूपरसगन्धस्पर्शादिवत् । नचोपलभ्यते शब्दान्तरं कार्यमित्यगुणः स्पर्शवतां शब्दः ।

**परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनो गुणः ॥२६॥**

अनात्मद्रव्येषूपलभ्यत्वान्नायमात्मगुणः । नाप्ययं मनोगुणः प्रत्यक्षत्वात् । नहि मनोगुणानां प्रत्यक्षमुपपद्यते । तेनैव तस्य ग्रहणासम्भवात् । एवं न देशगुणो न कालगुणः शब्दस्तस्य संस्कारत्वात्तयोस्तु शाश्वतयोः संस्कारानुपपत्तेः ।

**परिशेषाल्लिङ्गमाकाशस्य ॥२७॥**

यस्मादुक्ताष्टद्रव्याणामेकतमस्यापि गुणो नोपपद्यते शब्दः । तस्मात्परिशिष्टद्रव्यस्याकाशस्यायं गुणः । अत्रापि संज्ञाकर्म वायुवद् व्याख्यातम् ।

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥२८॥**

शब्दस्य क्रियात्मकत्वाद् गुणत्वाच्च तद्वत्त्वादाकाशस्य द्रव्यत्वम् । द्रव्यानाश्रितत्वाच्च नित्यमाकाशम् ।

तत्त्वं भावेन ॥२९॥

आकाशत्वं चास्य भावमात्रात्। न जातिवाचकं तस्य बहुत्वाभावात्। अथ कुत आकाशस्य विशेषा न सन्तीत्यत आह—

शब्दलिङ्गाविशेषाद् विशेषलिङ्गाभावाच्च ॥३०॥

शब्दैकलिङ्गमाकाशम्। तस्य लिङ्गान्तरं नोपलभ्यते। उपलब्धस्यापि शब्दलिङ्गस्य विशेषा नोपलभ्यन्ते। एक एव शब्दः सामान्यमात्रः। यथा रूपं गुणस्तस्य सामान्यस्य रक्तत्वपीतत्वादयो विशेषाः। तेन रूपत्वं जातिः। शब्दसामान्यस्यैवंविधा विशेषा नोपलभ्यन्ते।

ये तु तीव्रत्वमन्दत्वादयो विशेषाः शब्दस्योपलभ्यन्ते न ते पारिणामिकाः। मात्राविशेषनिबन्धना जातिर्न भवति। यथा रक्ततरत्वरक्ततमत्वनिबन्धना रक्तत्वजातिर्नावकल्पते। तस्मादाकाशस्य भाव आकाशत्वं न जातिराकाशत्वमिति।

तदनुविधानादेकपृथक्त्वं चेति ॥३१॥

लिङ्गमनुविधीयते लिङ्गी। यस्माल्लिङ्गस्य शब्दस्य विशेषा न दृश्यन्ते, लिङ्गिन आकाशस्यापि विशेषा नोपपद्यन्ते। शब्दविशेषेणाकाशस्य विशेषकं लिङ्गान्तरं नास्ति येनास्य विशेषाः प्रतिपद्येरन्। तस्मादेकमेवाकाशं द्रव्यान्तरेभ्यः पृथक् नित्यं च ॥३१॥

इति द्वितीये प्रथमाह्निकम्।



# अथ द्वितीयाध्याये द्वितीयाह्निकम्

अस्मिन्नाह्निके दिक्कालयोः परीक्षोपक्रम्यते । तत्र परीक्षाप्रवर्तनात्प्राक् परिच्छिन्नानां परीक्षाशेषं परिसमापयति ।

पृथिव्यादिचतुर्भूतानां स्थूलं स्वरूपं सूक्ष्मं चेति तिस्रोऽवस्था उक्ताः । तत्र परमाणुरेषां कारणभूतं सूक्ष्मं रूपं[1] प्रथमं पदम्[2] । सूक्ष्मैर्विशेषैः समवायेन द्वितीयपदे[3] आरब्धं द्रव्यमेषां विशेषाणां सामान्यं कार्यं स्वरूपं[4]मित्यभिधीयते । तृतीयपदे[5] स्वरूपभूतानां संयोगमात्रेण निष्पन्नं कार्यद्रव्यमेषां स्थूलरूपं[6]मुक्तम । सामान्यविशेषसमुदायोऽत्र द्रव्यमित्युक्तं पुरस्तात् ।

द्रव्यारम्भे तत्समवायात्तद्गुणैर्गुणान्तरारम्भस्त्वनिवार्य एव । यथा द्रव्यारम्भे सूक्ष्मभूतैः परमाणुभिः समवायात्स्वरूपाणुरारम्यते । तथैव परमाणुगतसूक्ष्मगुणैः स्वरूपगुणारम्भो भवति । तत्र परमाणुगतसूक्ष्मगुणस्वरूपं निर्विशेषं भवति । यथा वाय्वादिचतुर्ष्वपि परमाणुषु स्पर्शो विद्यते, तस्य साक्षादिन्द्रियसन्निकर्षाभावादग्राह्यत्वाच्छीतत्वोष्णत्वादिविशेषप्रतिपत्त्यसम्भवात् सर्वपरमाणुषु स्पर्शस्य निर्विशेषत्वमुक्तम् । तस्मान्न वायुपरमाणु-

---

१. Elementry form. २. First stage ३. Second stage. ४. Atomic form. ५. Third stage ६. Molecular form.

रनुष्णाशीतः, न तेजःपरमाणुरुष्णः, नाप्परमाणुः शीतो न च पृथिवीपरमाणुः शीतोष्णः। स्पर्शस्य शैत्यादयो विशेषास्तु कार्यात्मानः स्वरूपावस्थ एव द्रव्य उपजायन्ते तस्मादेते वैशेषिका गुणा उच्यन्ते, संयुक्तसमवायजन्यत्वादिति हि वक्ष्यति **संयुक्तसमवायादग्नेर्वैशेषिकम्** (१०,२,७) इति।

नचायं वैशेषिको गुणो विशेषगुणेन भ्रमितव्यः। भूतानामाकाशाद्यनुक्रमे पूर्वस्मादुत्तरं भूतं विशेषयति व्यावर्तयतीति विशेषगुण उक्तः। तथाहि स्पर्श आकाशाद् वायुं व्यावर्तयतीति न तेजःप्रभृतिभ्य उत्तरेभ्य इति वायुविशेषगुणः उक्तः। एवं रूपं तेजसो विशेषगुणो न वैशेषिको गुणः। तेजसो वैशेषिको गुणस्तूष्णता, सा च कार्ये तेजसि जायते न वा जायते इति व्यवस्थितोक्ता।

तत्र वैशेषिकगुणव्युत्पादनार्थं व्यवस्थां साधयति—

**पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रेगन्धाभावलिङ्गम् ॥१॥**

पार्थिवं हि वस्त्रं तेनावश्यं गन्धवता भवितव्यं, किन्तु नोपलभ्यते तत्र गन्धः। न त्वनुत्कृष्टत्वादनुलब्धिरिति वाच्यं, पुष्पवस्त्रसंयोगे तयोर्गन्धसन्निकर्षादुत्कृष्येत, तेन गन्धान्तरं प्रादुर्भूतमुपलभ्येत, तदपि नास्ति। तस्मात्क्वचिदभिभवात्क्वचिच्चानुद्भवात् सतोपि गन्धस्यानुपलब्धिः, क्वचिच्चोपलब्धिरिति व्यवस्थातो गुणानामभिव्यक्त्यनभिव्यक्ती भवतो न

नित्यमित्याह ॥१॥

व्यवस्थितः पृथिव्यां गन्धः ॥२॥

पृथिव्यां गन्ध एव विशेषगुणः स एव च वैशेषिको गुणः। तत्र वैशेषिकगन्धस्य पृथिव्यणूनां समवायेऽवस्थानविशेषात्क्वचिदभिव्यक्तिः क्वचिच्चानभिव्यक्तिरिति व्यवस्थितः पृथिव्यां गन्ध इति ।

अथ यदि पृथिव्यामेव गन्धः कथं नानागन्धारम्भो गन्धान्तरसन्निकर्षाभावेऽविशेषादिति ? पृथिव्यामेव वैविध्येन पार्थक्येनावस्थितो गन्धः। पृथिवीपरमाणावेव सुरभिरसुरभिश्चेति द्विविधं गन्धस्रोतः। तत्सन्निकर्षात्सान्निकृष्टसन्निकर्षाच्च गन्धनानात्वोपपत्तिरिति व्यवस्थितः पृथिव्यां गन्धः ॥२॥

एतेनोष्णता व्याख्याता ॥३॥

गन्धवदुष्णस्पर्शोऽपि वैशेषिकः कार्यगुणः। कस्येत्याह—

तेजस उष्णता ॥४॥

तेजस इति विभक्तिविपरिणामः तेजसि प्रसक्तस्पर्शवैविध्यनिवृत्त्यर्थं तेनैकविध एव स्पर्शः। यत्रयत्र चोष्णस्पर्श उपलब्धः स तेजस एव ।

अप्सु शीतता ॥५॥

स्वरूपाप्स्वेव शीतस्पर्शः। स तासां वैशेषिकं लिङ्गमिति ।

इदमत्र ध्येयं पृथिव्यप्तेजोवायूनां यदत्र विवेचनं कृतं तत्स्वरूपरूपाणां कार्याणां वेदितव्यं, न सूक्ष्मरूपाणां परमाणूनाम्। परमाणुतद्गुणानां चानुपलम्भान्नोपपद्यते लिङ्गत्वम्। ते तूपलब्धैः स्वरूपगुणैरनुमितसद्भावा अनुमेयमात्रा अप्रत्यक्षाश्च। तेनोष्णः शीतोऽनुष्णाशीत इति स्पर्शस्य विशेषाः स्वरूपद्रव्यनिष्ठा भवन्ति न सूक्ष्मनिष्ठाः। एवं स्वरूपाणामेव स्नेहद्रवत्वे भवतो न सूक्ष्माणाम्। एवमेव रूपसामान्यस्य रक्तत्वशुक्लत्वकृष्णत्वविशेषाः स्वरूपद्रव्याणामेव न सूक्ष्माणामिति। स्वरूपभूतैः स्थूलानामारम्भ उक्तः। सूक्ष्मैः स्वरूपारम्भश्चतुर्थाध्याये वक्ष्यते। देशकालाकाशानां निष्क्रियत्वादनारम्भकत्वात्स्थूलस्वरूपाभावात्सूक्ष्मत्वमेवेति द्रष्टव्यम्।

**अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥६॥**

अप्रत्यक्षः कालस्तस्यलैङ्गिकं ज्ञानम्। तत्र लिङ्गमाह। परिणममानेषु परमपरं चिरं क्षिप्रमिति प्रत्ययहेतुः कालः।

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥७॥**

द्रव्यं कालो गुणवत्त्वात्। चिरत्वक्षिप्रत्वादयो गुणा वस्तुतः कालनिष्ठा वस्तुषूपचाराद्व्यपदिश्यन्ते। द्रव्यानाश्रितत्त्वाच्च नित्यः कालः।

**तत्त्वं भावेन ॥८॥**

कालत्वमिति भावेन कालस्य भावः कालत्वं न जातिस्तस्य

बहुत्वाभावात् ।

**नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति ॥९॥**

कलयति कारयतीति कालस्तस्मात्कारणे कालाख्या । इति शब्दो हेतुवचनः । कथं कारयतीति । नित्येषु जातं, जायते, जनिष्यतीत्यादिप्रत्ययाभावान्नास्ति कालस्य कारणता । परिणममानेषु तु जातं, जायते, जनिष्यतीति कालाध्वभिः परिणामग्रहणात्कालस्य कारणतोक्ता ।

अथ दिक्साधनमाह—

**इत इदमिति यतस्तद्दिश्यं लिङ्गम् ॥१०॥**

इत इदमिति प्रत्ययो यतो जायते तत्परत्वमपरत्वं वा वस्तुषु गुण उपलभ्यते । स गुणो दिशं लिङ्गयति । ते च परत्वापरत्वे वस्तुतो दिङ्निष्ठे वस्तुषूपचाराद् गृह्येते । तस्माद् दिग्लिङ्गम् ।

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥११॥**

द्रव्यं देशः परत्वापरत्वगुणवत्त्वात् । नित्यश्च देशो द्रव्यान्तरानाश्रितत्वात् ।

**तत्त्वं भावेन ॥१२॥**

दिशो भावो दिक्त्वम् । न दिक्त्वं जातिः तस्य बहुत्वाभावात् । दिशो नानात्वव्यवहारहेतुमाह—

**कार्यविशेषेण नानात्वम् ॥१३॥**

कार्यमिति कार्यं द्रव्यं निमित्तम् । एकमेव कार्यमपेक्ष्यो-

र्ध्वाधो द्वे दिशौ भवतः। पृथिवीमपेक्ष्य परितः परत्वक्रमेण गृह्य-माणा उर्ध्वा दिक्। पृथिव्यभिमुखमपरत्वक्रमेणाधोदिक्।

**आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची ॥१४॥**

निमितद्वयापेक्षातो व्यावहारिकी दिक्। पृथिव्यादित्यसंयो-गमपेक्ष्य, यस्यां दिशि नित्यं सूर्य उदेति सा प्राची दिक्।

**तथा दक्षिणा प्रतीची उदीची ॥१५॥**

पूर्वाभिमुखस्य पुरुषस्य दक्षिणतो दक्षिणा दिक्। वामत-उत्तरा दिक्। पश्चात् पश्चिमा दिक् ॥१५॥

**एतेन दिगन्तरालानि व्याख्यातानि ॥१६॥**

दिशां निपुणतरनिर्णयार्थं, पूर्वोतरयोरन्तराले त्रयो राशयः, प्रतिराशि त्रिंशदंशाः। तेन चतुर्ष्वन्तरालेषु द्वादश राशयस्तेषु षष्ट्युत्तरत्रिशतमंशाः सम्भवन्ति। तेषां पुनः कलाविकलादि-विभागेन सूक्ष्मतरदिङ्मानकल्पना शास्त्रे प्रसिद्धा।

**अथ शब्दः परीक्षणीयः**। स च विद्यमानोऽप्यर्थो द्रव्य-गुणकर्मसु नोद्दिष्टः। तत्र शब्दो द्रव्यं गुणः कर्म वेति संशयः। तत्रापि नित्योऽनित्यो वेति पुनः संशयास्पद इति परीक्षणीयः शब्दः।

यद्यपि श्रद्धया सत्यमाप्यते इति ह्याम्नातं दृश्यतेऽपि च। तथापि अतत्त्वविदोऽदक्षस्य श्रुतमात्रज्ञानिनो मूढस्य श्रद्धामात्रेणो-पात्तोऽर्थो न सत्याय कल्पते धृतिविप्लवात्। पुनश्च वक्तुराप्त-

त्वाधीना हि मूढस्य परतन्त्रप्रज्ञस्य श्रद्धा भवति । आप्तत्वं खलु तत्त्वविदो दक्षस्यैवोपपद्यते । तच्च तत्त्वज्ञानं सर्वविद्यासु विमर्श-मूलमेव सम्भवति । तस्मात् सर्वतर्कमूलं संशय एवादौ परीक्ष-णीय इति ।

प्रत्यक्षमनुमानमिति ज्ञाननिष्पत्तिद्वैविध्यात्संशयोऽपि द्विविधः। तत्रादौ प्रत्यक्षे संशयस्वरूपमाह—

**सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च संशयः ॥१७॥**

लिङ्गाधीनं हि लिङ्गिज्ञानं भवति । तत्रापि सान्दिह्यमाने-ऽर्थे वैशेषिकं लिङ्गं तत्त्वावधारणाय कल्पते । सामान्यं हि लिङ्ग मन्यत्रातिव्याप्तेर्न तत्त्वमवधारयति । पूर्वदृष्टं वैशेषिकलिङ्गं स्मर्यते किन्तु नोपलभ्यते । तस्मात्संशयः । यथा सौवर्णं कुण्डलं पैत्तलेन सन्दिह्यते । पीतमित्युभयत्र समानं प्रत्यक्षं नैकतरमव-धारयति । तत्र भारो वैशेषिकं लिङ्गम् । गुरु सुवर्णं लघु च पित्तलमिति पूर्वदृष्टं स्मर्यते । तत्र भारस्य विशेषलिङ्गस्याप्रत्यक्षे सौवर्णं पैत्तलं वेति संशयः । इति विशेषलिङ्गाभावे संशयः । क्व-चिच्च लिङ्गमेव संदिग्धमित्याह—

**दृष्टं च दृष्टवत् ॥१८॥**

लिङ्गेऽपि विशेषदर्शनात्संशयो भवति । यत् पूर्वं दृष्टं लिङ्गं तेनैव सर्वत्र भवितव्यम् ।

**यथादृष्टमयथादृष्टत्वात् ॥१९॥**

यादृग्विधं लिङ्गं पूर्वं दृष्टं तादृग्विधमेव चेन्न दृश्यते किञ्चिद्विशेषेण दृश्यते तदापि संशयः। पीतत्वं सुवर्णपित्तलयोः समानं, किन्तु सुवर्णस्य रुचिरं पीतत्वं पूर्वदृष्टं स्मर्यते। इदानीं न तथा रुचिरं दृश्यते। अतः सुवर्णं पित्तलं वेति संशयः। प्रत्यक्षे संशयमुक्त्वाऽनुमानिके संशयमाह—

**विद्याऽविद्यातश्च संशयः ॥२०॥**

तर्काप्रतिष्ठानात्तर्कदोषाद्वापि संशयः। मेघोन्नत्या वृष्टिर्भविष्यति न वा भविष्यतीति विद्याऽविद्यातः संशयः।

शब्दे संशय इत्युक्तम्। परीक्षितः संशयः। शब्दोऽधुना परीक्षणीयः। तत्रेदमनुयुज्यते, परा पश्यन्ती मध्यमा वैखरीति चतुर्विधं शब्दब्रह्माम्नातम्। तत्र कतमोऽयं शब्दो योऽत्र परीक्षणीयत्वेनाधिक्रियत इत्यत्राह—

**श्रोत्रग्रहणो योऽर्थः स शब्दः ॥२१॥**

योऽयं श्रोत्रेन्द्रियेण लोके विषयो गृह्यते सोऽत्र शब्दः प्रक्रियते, न परा पश्यन्तीवाग्रूपो नित्याम्नायमानोऽलौकिकः शब्दः। तथापि यावतांऽशेन श्रोत्रविषय आम्नायस्तावता तु परीक्षाविषय एव। स च शब्दो ध्वनिरूपो वर्णरूपो वाग्रूपश्चेति त्रिधा व्यवस्थितः परीक्ष्यते। तत्रादौ शब्दो द्रव्यं गुणः कर्म वेति संशयमाह—

**तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वात् ॥२२॥**

द्रव्यगुणकर्मणामेकतमेऽपि शब्दोनान्तर्भवति । सर्वेभ्योऽस्य विशेषदर्शनात् । द्रव्येऽभ्युपगतेऽस्य द्रव्याणि तुल्यजातीयानि विजातीये च गुणकर्मणी । तत्र तुल्यजातीयेभ्यो द्रव्येभ्योऽप्यस्य विशेषो दृश्यते । अर्थान्तरभूतेभ्यो गुणकर्मभ्योऽपि विशेषो दृश्यते । गुणेऽभ्युपगतेऽस्य गुणाः तुल्यजातीयाः । अर्थान्तरभूते विजातीये च द्रव्यकर्मणी । तत्राप्युभयथा विशेषो दृष्टः । एवं कर्मस्वन्तर्भावे कर्माणि सजातीयानि विजातीयौ च द्रव्यगुणौ । तत्रापि सजातीयेभ्यो कर्मभ्योऽर्थान्तरभूतेभ्यो द्रव्यगुणेभ्योऽस्य विशेषदर्शनात्संदिग्धः शब्दः । कोऽस्य द्रव्येभ्यो विशेषो यस्मान्नायं द्रव्यमित्याह—

**एकद्रव्यत्वान्न द्रव्यम् ॥२३॥**

एकद्रव्याश्रितो हि शब्दो दृश्यत इति द्रव्याश्रितत्वान्नद्रव्यम् । अथैकद्रव्याश्रितत्वाच्छब्दः कर्म स्यात् । एकद्रव्यत्वात्कर्मण इति ।

**नापि कर्माचाक्षुषत्वात् ॥२४॥**

चक्षुर्ग्राह्येष्वेकद्रव्येषु विद्यमानं कर्मापि चक्षुषा गृह्यते । तस्माच्चाक्षुषं कर्मोक्तम् । शब्दस्तु चाक्षुषेष्वप्येकद्रव्येष्वाश्रितोन चाक्षुष इति कर्मभ्यो विशेषान्न कर्म ।

गुणेभ्यः को विशेष इत्याह—

**गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥२५॥**

एकद्रव्ये विद्यमानं कर्म संयोगाद् द्रव्यान्तरमपवृङ्क्ते । एवं

शब्दोऽप्युपसर्गादद्रव्यादद्रव्यान्तरमपवृक्तो दृश्यते। तदस्य कर्मभिः साधर्म्यं गुणैश्च वैधर्म्यमिति नैकान्ततो गुणत्वमुपपद्यते शब्दस्य ।

अथ पदार्थान्तरं स्याच्छब्द इत्यपि नोपपद्यते। गुणकर्मभ्यामस्य व्यावर्तकलिङ्गानुपलब्धेः । तस्माल्लक्षणविरोधान्न गुणकर्मसूद्दिष्टो नापि पदार्थान्तरत्वेनेति संदिग्धः शब्दः ।

अथ शब्दनित्यत्वानित्यत्वपरीक्षा—

**सतो लिङ्गाभावात् ॥२६॥**

शब्दः सन् त्रिकालस्थायी नित्य इत्यपि नोपपद्यते। रूपादिवदस्य नित्यव्याप्त्यदर्शनात्। क्षणिकश्चायमुपलभ्यते। अपि च—

**नित्यवैधर्म्यात् ॥२७॥**

अनुत्पत्तिधर्मकमविनाशि च नित्यं दृष्टं न तथा शब्दः। अस्य कार्यत्वमनित्यत्वं चावधारयन्नाह—

**अनित्यश्चायं कारणतः ॥२८॥**

योऽयं शब्दः परीक्ष्यते स भेरीदण्डाभिघातादुत्पद्यते भेरीपाणिश्लेषेण च विनश्यतीत्युत्पत्तिधर्मको विनाशशीलश्च दृष्टस्तस्मात्कार्यं शब्दोऽनित्यश्च। कार्यशब्दं परीक्ष्य कारणशब्दमाह—

**नचासिद्धं विकारात् ॥२९॥**

प्रकृतिं विना नास्ति विकारसम्भवः। यत्कार्यरूपेणोपलभ्यते तदसिद्धमर्थादसदिति नोपपद्यते, कारणाभावात्कार्याभाव इति । नाप्यसतः सञ्जायते । तस्मादस्त्यस्य शब्दकार्यस्य कारणं शब्दः ।

अथ रूपादिवदयं शब्दो नित्योऽनभिव्यक्तो व्यञ्जकेनाभिव्यक्तिधर्मकः स्यादित्यत्राह—

**अभिव्यक्तौ दोषात् ॥३०॥**

अभिव्यक्तिर्नाम यथाभूतस्यानुपलब्धार्थस्य व्यञ्जकेनोपलम्भनम् । यथा वस्त्रं प्रकाशाभावेऽपि तथैव रक्तं यथा प्रकाशे । किन्तु प्रकाशेनाभिव्यज्यते रक्तमिति । न तु रक्तं क्रियते । तत्र प्रकाशोऽभिव्यञ्जकः प्रकाश्यस्य रक्तत्वस्य । न चैवं भेरीस्थितः शब्दो यथा भूतो दण्डाभिघातेनाभिव्यज्यते । अपि तु जन्यते, भेरीदण्डसंयोगनिवृत्तावपि शब्दश्रवणात् । तस्माज्जन्यः शब्दो नाभिव्यङ्ग्यः । न हि व्यञ्जकनिवृत्ता अभिव्यक्तिः स्थातुमर्हतीति ।

कार्यशब्दनिष्पत्तिप्रकारमाह—

**संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ॥३१॥**

शब्दसंयोगविभागैस्त्रिभिः समुच्चितैः शब्दनिष्पत्तिर्नैकतरेण द्वाभ्यां वेति चकारद्वयार्थः । तत्र शब्दप्रकृतिः कारणशब्द इति । स च वायोः स्पर्शवदाकाशस्य गुण ऋजुसंस्कारात्मा शब्दप्रकृतिभूतो गुणविशेषः । स नाद उच्यते । द्रव्यद्वयसंयोगात्तन्मध्यस्थाकाशोऽभिहत आपीडितश्च संकोचमापद्यते । विभागे जाते च पुनः सहसा विकासं प्राप्नोति, स स्फोटः । तेन लोष्टाद्यभिहतजलतरंगवदाकाशे शब्दसंस्कारा निष्पद्यन्ते तदनुविधानादसौ नादः कार्यशब्दात्मा श्रोत्रेण गृह्यते ।

संयोगेऽभिघातवेगविशेषात्संयोगक्षेत्रविशेषाच्च स्फोटविशेषा जायन्ते। तद्विशेषाच्च शब्दविशेषा निष्पद्यन्ते। तथा च वेगविशेषात्संस्कारगतिविस्तारविशेषस्ततश्च तारमन्द्रमध्यस्वरावच्छिन्नाः श्रुतिविशेषा जायन्ते। संयोगस्थानमहत्त्वे महांश्च्छब्दोऽल्पत्वेऽल्पः। स्थानस्य समत्वबन्धुरत्वादिविशेषात् स्फोटविशेषेभ्यः ककारादिवर्णनिष्पत्तिः।

न च मनुष्यादिभिश्चेतनैरेव ककारादिवर्णा उच्चार्यन्ते। नह्यत्र जडत्वं चेतनत्वं वा ककरादिवर्णोत्पत्तौ हेतुरस्ति। स्थानप्रयत्नविशिष्टः स्फोटः एव हेतुः। स च जडचेतनयोः समानः। दृश्यते हि प्रतिध्वनिपटलेषु सूच्यग्रसंयोगविभागैः वर्णानां वाक्यानां च निष्पत्तिः। तस्मादस्ति नित्यः कारणभूतः शब्दो-नादः संयोगविभागैः कार्यतां प्राप्त उपलब्धः।

## लिङ्गाच्च नित्यः शब्दः ॥३२॥

शब्दनित्यत्वे लिङ्गान्तरमप्यस्ति। अनित्य इति पाठस्तु क्वचिदृष्टः प्रामादिकः प्रकरणविरोधात्।

## द्वयोस्तु प्रवृत्त्योरभावात् ॥३३॥

अर्थवाँछब्दो वागुच्यते। वाचा हि लोकव्यवहारः प्रवर्तते। यदि नित्यः शब्दार्थो नित्या च वाङ् न स्याद् वक्तृश्रोत्रोर्द्वयोर्वाग्व्यवहारे प्रवृत्तिरेव न सम्भवेदसम्प्रतिपत्तेः। अपि च—

## प्रथमा शब्दात् ॥३४॥

प्रथमा ऋग् द्वितीया ऋगित्यादि वेदे व्यवहारान्नित्यः शब्दः ।

## सम्प्रतिपत्तिभावाच्च ॥३५॥

अन्योपि शब्दनित्यत्वे हेतुरुच्यते । य एव गकारः पूर्वमुच्चारितः स एवाधुनाप्युच्चार्यते इति प्रत्यभिज्ञानादपि नित्यः शब्दः । तस्मादस्ति शब्दः स्वरूपतो नित्यः संयोगविभागैर्ध्वनिभिः कार्यतां प्राप्तोऽभिव्यज्यत इति ।

## संदिग्धाः सति बहुत्वे ॥३६॥

स्वरूपतो नित्यः शब्दः कार्यकारणात्मा च रूपादिवदिति सधितम् । किन्तु तस्य गुणत्वकर्मत्वसाधने सर्वेऽपि हेतवः संदिग्धाः लिङ्गानां बहुत्वात् विरोधादिति ।

## संख्याभावस्तु सामान्यतः ॥३७॥

अयमप्यत्र शब्दे विशेषः । कर्मगुणानां भक्त्यभावात्संख्याभावो न सम्भवति । ककारादीनां भक्तिकृतं द्विस्त्रिरुच्चारणं दृष्टं परिच्छिन्नद्रव्यवदिति संख्याभाव उपपद्यते वर्णानामित्यत आह सामान्यत इति । एक एव ककारः सामान्यः पुनःपुनः क्रमेणोच्चार्यते । न बहवः ककारा आमलकवद्युगपदुपलब्धुं शक्याः इति सर्वत्र सर्वदा सर्वैरुच्चार्यमाण एक एव ककारोऽविशेषादिति ।

इति द्वितीये द्वितीयाह्निकम् ।



# अथ तृतीयाध्याये प्रथमाह्निकम्

आत्ममनसोः साधनं तृतीयाध्यायविषयः । तत्रात्मा मनश्चाप्रत्यक्षे । तयोस्त्वनुमानात्सिद्धिः । अनुमानं पुनर्लिङ्गाधीनम् । लिङ्गव्यभिचारे सर्वाऽपि अनुमितिपरम्पराऽप्रमाणं भवति विप्लवात् । दृश्यते च सूपपन्नं सर्वथाऽनाबिलमपीदं वैशेषिकं दर्शनं तार्किकधूर्तैर्हेत्वाभासानाश्रित्य दुर्व्याख्यानैराकुलीकृतमित्यस्मिन्नाह्निके आत्मपरीक्षाप्रसङ्गेनादौ लिङ्गपरीक्षा प्रक्रियते—

**प्रसिद्धा इन्द्रियार्थाः ॥१॥**

शब्दस्पर्शरूपरसगन्धानां बाह्यैकैकेन्द्रियग्राह्याणां गुणानां संस्कारात्मकत्वमुक्तम् । संस्कारस्य पुनर्जातिगत्याकृत्याधिष्ठानानीति विशेषा उक्ताः ।

शरीरेन्द्रियविषयभेदात् त्रिविधं कार्यद्रव्यमुक्तम् । तत्र रूपरसगन्धसंस्काराणां पृथ्वीविषयोऽधिष्ठानं इन्द्रियपक्षे तु घ्राणेन्द्रियाधिष्ठानो गन्धः । रसाधिष्ठानं रसनेन्द्रियम् । रूपाधिष्ठानं चक्षुः । स्पर्शनेन्द्रियं स्पर्शसंस्काराणामधिष्ठानमिति ।

चक्षुर्वर्तिकृष्णतारात्मकेन्द्रियाद् रूपसंकारा निःसृत्य पृथिव्यादिरूपाधिष्ठानविषयं प्रति प्रसेधन्ति । पृथिव्याश्चाधिष्ठानात्तथैव रूपसंस्कारा निःसृत्य चक्षुरिद्रियं प्रति सेधन्ति । सेयमिन्द्रियार्थनिःसृतयोः सजातीयसंस्कारयोः इतरेतरसम्प्रयोगरूपा प्रत्यासत्ति-

रिन्द्रियार्थप्रसिद्धिरुच्यते ।

नानागतिविस्तारविशिष्टो महाँश्चार्थसंस्कारो भवति, विषयाणां नानारूपदर्शनात्। नियतगतिविस्तारोऽणुश्चेन्द्रियसंस्कारः। तयोः सन्निकर्षे विषयसंस्कारोऽपकृष्यते, इन्द्रियसंस्कारश्चोत्कृष्यते। तेनोभयमध्यानुपाती विलक्षणगतिविस्तार एक एव विशेषसंस्कारो निष्पद्यते। इन्द्रियसंस्कारः स्वपदादियान् विक्षिप्त इति पुरुषाधिष्ठितेन्द्रियसंस्कारोपारूढेन ज्ञानसंस्कारेणाध्यवसीयते। साऽपेक्षाबुद्धिः रक्तत्वपीतत्वादिबुद्धिलक्षणोऽध्यवसाय आत्मेन्द्रियार्थसन्निकर्षान्निष्पद्यते। न केवलजडयोरिन्द्रियार्थयोः सन्निकर्षादिति। सेयमिन्द्रियार्थप्रसिद्धिः प्रत्यक्षनिष्पत्तिविधिरुक्तः। तत्र लिङ्गस्वरूपविवेकार्थमात्मनि लिङ्गाभासं दर्शयन्नाह —

**इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥२॥**

हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरमिति वक्ष्यति। समानार्थाः सामान्येन प्रमाणवाचिनोऽप्येते शब्दा प्रमाणविशेषात् किञ्चिद् विशेषेणार्थान् व्यपदिशन्ति न तत्वत एकमेवार्थम्। न हि सूत्रेषु केवलवैचित्र्यार्थं शब्दविशेषः प्रयुज्यते गौरवात्। तथा च गौतमीयसूत्रे 'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमन'मित्यत्र हेत्वपदेशादिति षष्ठीतत्पुरुषेण हेतोरपदेशेन सम्बन्धग्रहणादर्थान्तरत्वं दर्शितम्। तत्र सिद्धोऽर्थो दृष्टान्तः। तस्मिन् विद्यमानं लिङ्गं हेतुरुच्यते। तस्यैव लिङ्गस्य साध्ये व्याप्ति-

दर्शनमपदेश इत्ययमेकस्यैव लिङ्गस्य व्यापकस्य व्याप्यभेदेन व्यपदेशभेदः ।

अयमप्यत्र विशेषो द्रष्टव्यः । लिङ्गं तावज्ज्ञानमात्रे कारणं गृह्यते । हेतुशब्दस्तु वस्तुकारणेऽपि दृष्टः । यथा धूमोऽग्नेर्लिङ्गं ज्ञापकमात्रं न निष्पत्तिकारणम् । यत्राग्निर्धूमस्य लिङ्गं तत्राग्निर्धूमस्य ज्ञापकमपि भवति निमित्तकारणमर्पात्यग्निर्धूमस्य हेतुर्भवति । लिङ्गत्वं तूभमथा समानं, हेतुत्वं तावदेकत एव । तेन-क्वचिद् वस्तु धर्ममात्रं लिङ्गं भवति क्वचित्कारणमपि लिङ्गमिति विशेषः ।

अन्योऽप्यत्र लैङ्गिकज्ञाने विशेषो द्रष्टव्यः । लिङ्गेन खलु प्रसिद्धेन भवितव्यम् । प्रसिद्धं नाम सामान्यतो दृष्टं नित्यव्याप्तिकमिति । तत्पुनर्द्विविधं प्रत्यक्षमानुमानिकं चेति । प्रत्यक्षपूर्वकं ह्यानुमानिकं भवतीत्युद्दिष्टार्थसाधने आदौ प्रत्यक्षमेव लिङ्गं विधीयते नानुमानिकम् ।

अस्ति ज्ञानं नाम सर्वसाधारणोऽर्थः । तच्च ज्ञानं वृत्त्यात्मकं विज्ञायते । वृत्त्यात्मनामाश्रयविरहेणानवस्थानाद् द्रव्याश्रितमेव तत् सम्भवतीति स आश्रयोऽन्वेष्टव्यः ।

तत्र जडैकान्तवादिचार्वाकमतं मायावादं परामृशति । अयमत्र-तेषामभ्युपगमः । सर्वं जडात्मकं नह्यत्र चेतनं नाम किञ्चित्तत्त्वान्तरमस्ति । यथा जडयोरेव दधिगोमययोः संयोगाच्चेतनवृश्चिकोत्पत्तिरेवमेव जडयोरिन्द्रियार्थयोः प्रसेधनाज्ज्ञानोत्पत्ति

भवतीति न युज्यते ज्ञानाश्रयत्वेन द्रव्यान्तरकल्पना । तेनाज्ञानं नित्यं ज्ञानं तु जन्यमनित्यञ्चेति ।

एवमेव चिदेकान्तवादिप्रतिलोमचार्वाकमतं तथाकथिताद्वैतवादमप्यत्र परामृष्टं भवति । अयमत्र तेषामभ्युपगमः । अजडधर्मकं शुद्धचिन्मात्रं ब्रह्म । यथा पारिमण्डलेभ्यः परमाणुभ्यस्त्र्यस्रचतुरस्रादिविलक्षणपरिमाणं कार्यं जायते एवमेव चिन्मात्रमपि ब्रह्म व्याक्रियमाणं जडत्वं प्रपद्यते। तेन ज्ञानं नित्यं जडत्वं तु जन्यमनित्यञ्चेति । तत्प्रत्याचष्टे—

**सोऽनपदेशः ॥३॥**

भवतु नामेन्द्रियार्थप्रसिद्धेर्ज्ञानानिष्पत्तौ निमित्तकारणत्वाद्धेतुता। किं त्वपदेशत्वं नोपपद्यते दृष्टान्ताभावात् । न ह्यत्र वृश्चिको दृष्टान्तः साध्यसमत्वात् । अपि च यस्माद्दधिगोमयसंयोगाद् वृश्चिकोत्पत्तिस्तस्मादिन्द्रियार्थप्रसिद्धेर्ज्ञानोत्पत्तिरिति हेतुवचनं नोपपद्यते । नापि परिमाणवैलक्षण्यं दृष्टान्तः । तेषां परिमाणत्वसामान्यात् साजात्यात् चित्त्वजडत्वयोस्तु विरोधाद्वैजात्याच्च । एवमपि नेदं हेतुवचनं साधु कस्मात् ।

**कारणाज्ञानात् ॥४॥**

कारणगुणपूर्वको हि कार्यगुणो दृष्टः । इह तावत् कारणेषु इन्द्रियार्थेषु ज्ञानसत्त्वे तेषां ज्ञानात्मकत्वे वा प्रमाणं नास्ति ।

**कार्येषु ज्ञानात् ॥५॥**

इन्द्रियार्थसंस्काराणां सन्निकर्षात् कार्यसंस्कारेषु जातेषु ज्ञान-

निष्पत्तिर्दृष्टा । तत् कथमकारणगुणपूर्वकमनन्वयं ज्ञानं निष्पद्येते त्यन्यदेव ज्ञानहेतुर्नेन्द्रियाणि नाप्यर्थाः । अन्यमप्यत्र निर्णायकं हेतुमाह ।

अज्ञानाच्च ॥६॥

सत्यामपीन्द्रियार्थप्रसिद्धौ कचिज्ज्ञानं जन्यते कचिच्च न जायते । यदीन्द्रियार्था ज्ञानात्मकाः स्युस्तत्प्रसिद्धिर्वा ज्ञानकारणं स्यात्तत्र नित्यं स्यादिति ।

अन्यदेवहेतुरित्यनपदेशः ॥७॥

इन्द्रियार्थेभ्योऽन्यदेव किंचिद्द्रव्यान्तरं गम्यते यत्रेदं ज्ञान माश्रितम् । अपि च तत्सत्त्वे इन्द्रियार्थप्रसिद्धेरन्यदेव कारण मन्वेष्टव्यम् ।

यस्मादिन्द्रियार्थप्रसिद्धावपि कचित् ज्ञानप्रवृत्तिः कचिचा- प्रवृत्तिरिति प्रत्यगात्मनि ज्ञानं समवेतं गम्यते । तदधीनत्वाज्ज्ञान- स्य प्रवृत्तिनिवृत्त्योः । अपदेशाभासं प्रदर्श्यापदेशस्वरूपमाह ।

अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥८॥

यदेव लिङ्गं दृष्टान्ते हेतुत्वेनोपात्तं तदेव साध्येऽपदिश्यते नार्थान्तरम् । दृष्टान्तेऽग्नौ दृष्टो धूम एव साध्ये पर्वताग्नावपदेशो भवति नार्थान्तरम् । अपि च यस्माल्लिङ्गधर्मकोऽर्थ एव हेतुर्भवति स एव चापदेशो भवितुमर्हति । तस्माल्लिङ्गधर्मान् परीक्ष्यापदेश- शेषपरीक्षा प्रवर्तनीयेति पञ्चविधं लिङ्गं दर्शयन्नाह ।

संयोगि समवाय्येकार्थसमवायि विरोधि च ॥९॥

लिङ्गमिति शेषः । तत्र कार्ये संयोगिव्याप्तिकं संयोगिलिङ्गं यथा तैलादिषु गन्धः । समवायेन सम्बद्धं लिङ्गं समवायि यथा पृथिव्यां गन्धः । एकार्थसमवायिलिङ्गं संयुक्तसमवायिव्याप्तिकं यथाऽग्नेरुष्णता । विरोधिलिङ्गमनेकविधं वक्ष्यमाणम् । -अथ पञ्चमं लिङ्गमाह —

## कार्यं कार्यान्तरस्य ॥१०॥

एभिः कारणैरिदं कार्यमारब्धं दृष्टमित्यन्यत्राप्येभिरेवंविधमेव कार्यं जनिष्यत इति । न चात्र सहचारिलिङ्गं विवक्षितम् । पृथिव्या साहचर्याद् गन्धज्ञाने यत्स्पर्शस्यापि प्रतिपत्तिस्तदानुमानिकं ज्ञानम् । यस्माद् गन्धवती तस्मात् पृथ्वी । यस्माच्च पृथिवी तस्मात्सामान्यतो दृष्टात्स्पर्शवत्यपीत्यानुमानिकः स्पर्शः । विरोधिलिङ्गमाह द्वाभ्याम् ।

## विरोध्यभूतं भूतस्य ॥११॥

यन्न पूर्वं क्वचिद् भूतं तन्न भवति यथा शीतोऽग्निरिति ।

## भूतमभूतस्य ॥१२॥

विरोधिलिङ्गमिति शेषः । यन्नियमेन नित्यव्याप्तिकं लिङ्गं तत्क्वचिन्न भविष्यतीति न सम्भवति । एवं लिङ्गं विविच्यापदेशशेषधर्मानाह—

## भूतो भूतस्य ॥१३॥

यदेव नित्यं नियमेन भवति स एव हेतुः स एव चापदेशो भवति । न क्वाचित्कव्याप्तिको हेतुरपदेशो भवति । अन्य-

मप्यपदेशधर्ममाहः—

**प्रसिद्धिपूर्वकत्वादपदेशस्य ॥१४॥**

सामान्यतो दृष्टेन नित्यव्याप्तिकेनेन्द्रियार्थसन्निष्कर्षजप्रत्यक्ष-गृहीतेन चाद्यलिङ्गेन भवितव्यम् । नहि द्रव्यसाधनेऽनुक्लृप्तलिङ्ग-स्य सामर्थ्यमस्ति । तस्मात् —

**अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः ॥१५॥**

यत्र प्रत्यक्षं न च नित्यव्याप्तिकं लिङ्गं न सोऽपदेशो भवति । अविद्यमानं लिङ्गमसन्न तदपदेशाय कल्पते । एवं संदिग्धमनवधारितं लिङ्गमप्यपदेशो न भवतीति स हेत्वाभासः । तत्र त्रिविधेऽपि हेत्वाभासेऽप्रसिद्धस्तु प्रसिद्ध एव । असद्धेत्वाभासमाह—

**यस्माद्विषाणी तस्मादश्वः ॥१६॥**

इति असद्धेत्वाभासस्योदाहरणम् । नहि कश्चिदश्वो विषाणी भवतीत्यसम्भवो हेतुः । संदिग्धमाहः—

**यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम्॥१७॥**

द्वौ संशयस्यान्तौ भवतः, इदं वेदं वेति । तत्रैकस्यान्तस्या-वधारणं निर्णयः । यस्माद् विषाणी तस्माद्गौर्महिषो वेत्यनैकान्ति-कत्वात् संदिग्धोऽपदेशो महिषोऽपि विषाणी भवतीति नैकतर-मवधारयतीति ।

एवं आत्मपरीक्षाप्रसंगेन लिङ्गं हेतुं हेत्वाभासांश्च विविच्य प्रकृतात्मपरीक्षां प्रवर्तयन्नाह—

**आत्मेन्द्रियार्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत् ॥१८॥**

प्रवृत्तिनिवृत्तिपूर्वकं ज्ञानं दृष्टम्। ते त्वात्माधीने दृष्टे, नेन्द्रियार्थप्रसिद्ध्यधीने। तस्मादिन्द्रियार्थप्रसिद्धेर्यन्निष्पद्यते न तज्ज्ञानम्। जडसंस्कारमात्रमिति ज्ञानादन्यदेव तत्। यत्त्वात्मसंस्कारोपारूढेन्द्रियार्थसन्निकर्षान्निष्पद्यते तदन्यत्। तज्ज्ञानम्। तेन ज्ञानं प्रवृत्तिनिवृत्ती चेत्यात्मनो लिङ्गानि। तस्मादस्त्यात्मा चिदात्माऽव्यक्तजडशरीरोऽनादिरिन्द्रियार्थेभ्योऽन्तरात्मतः परमात्मतश्च भिन्नो यत्रेदंज्ञानमाश्रितमिति। तस्य परे ब्रह्मणि लयस्तु विषयान्तरमुपरिष्टाद्वक्ष्यमाणम्।

इन्द्रियाणां प्रवृत्तिनिवृत्ती त्वात्माधीने। अर्थानां प्रवृत्तौ को हेतुः का च तत्र व्यवस्थेत्यत आह--

**प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥१९॥**

परत्रेत्यन्तरात्मनि परमात्मनि चेत्युभयोर्ग्रहणं त्रल्प्रत्ययबलात्। अन्तर्यामित्वाद् दूरौ, प्रवर्तकत्वान्नियामकत्वाच्चोत्तमौ, आत्मत्वेनाग्रहणाच्चास्मात्प्रत्यगात्मनः परावुक्तावन्तरात्मपरमात्मानौ। समवायः प्रवृत्तिनिवृत्ती चात्र दृष्टे तत्र लिङ्गमित्यर्थः। प्रत्यगात्मेत्यहंशब्दवाच्यः शारीर आत्मा। विराट्शरीरोऽन्तरात्मा। अव्यक्तशरीरश्चिदात्मा परमात्मेति शास्त्रविनिश्चयात्। भौतिकसमवायस्य भूतं समवायिकारणम्। विसर्गसमवायस्यायं प्रत्यगात्मा समवायिकारणम्। ब्रह्माण्डसमवायस्यान्तरात्मा समवायिकारणम्। आण्डसर्गात्मकसमवायस्य परमात्मा समवायिकारणमित्यर्थः।

ननु परत्रेति यज्ञदत्तादीनां परात्मनां ग्रहणं स्यादिति चेन्न। यज्ञदत्तादेरात्मनः प्रत्यगात्मत्वेन गतार्थत्वात्। तस्य चोत्तराह्निके साधयिष्यमाणत्वादिति। चकाराज्ज्ञानस्यापि ग्रहणमिति।

संयुक्तसमवायात्मकं पांचभौतिकं रचनाविशिष्टमुत्पत्तिस्थितिविनाशशीलमेकत्वेन घटितमिदं शरीरं सत्स्वपि भूतकालनियतिस्वभावेषु कारणान्तरेषु नान्तरेणात्मानं समवायिकारणं सम्भवति। एवं समन्वयाच्छास्त्रयोनित्वात्समत्रग्रहाच्छरीरधर्मकं समवायात्मकं चेदं ब्रह्माण्डम्। नान्तरेणात्मानं समवायिकारणं सम्भवितुमर्हति। कालभूतादिकारणानामनर्षणत्वात् स्वतः प्रवृत्तिनिवृत्तिरचनाद्यनुपपत्तेः। तस्य समवायिकारणं यः पर आत्मा सोऽन्तरात्मा।

पुनर्यथेदं शरीरं सत्स्वपि पुरुषादिकारणेषु चोदनातन्त्रं तथेदं ब्रह्माण्डमप्युत्पत्तिस्थितिविनाशशीलत्वात्परतन्त्रम्। यत्तन्त्रोऽयं विराट्पुरुषः सोऽव्यक्तशरीरश्चिदात्मा परमात्मोच्यते। अव्यक्तस्य नित्यत्वात्स्वतन्त्रो नित्यश्च परमात्मेति। तथा च शास्त्रम्— **अथाङ्गिरास्त्रिविधः पुरुषोऽजायतात्मान्तरात्मा-परमात्माचेति** (आत्मो.१) इति।

इति तृतीये प्रथमाह्निकम।

## अथ तृतीयाध्याये द्वितीयाह्निकम्

**आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसोलिङ्गम् ॥१॥**

आत्माश्रितं ज्ञानमुक्तम्। समवहितेष्वप्यात्मेन्द्रियार्थेषु क्वचिज्ज्ञानं भवति, क्वचित्तु न भवति। तेनात्मेन्द्रियमध्ये किञ्चित्करणान्तरं गम्यते यस्मिन्नवहिते ज्ञानस्य भावोऽनवहिते चाभावः। तत्करणं मनः। तथा हि लोके व्यवहारः, नाहमद्राक्षन्नाहमश्रौषम्। मनो मेऽन्यत्राभूदिति।

**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥२॥**

तच्च मनः क्रियावत्वाद् गुणवत्वाच्च द्रव्यम्। सर्ववृत्तिष्वविकार्यत्वाद् द्रव्यान्तरानाश्रितत्वाच्च नित्यम्।

**प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥३॥**

तच्च मनो व्यासज्यवृत्ति दृष्टम्। इन्द्रियज्ञानानां पर्यायेणैकैकश उपलब्धेर्न युगपत्सर्वैरिन्द्रियैः सम्बध्यते। एवं प्रयत्नेष्वपि पर्यायेण प्रवृत्तिदर्शनात् व्यासज्यवृत्ति मनो दृष्टम्। तस्मादेकमेव प्रत्यात्मनियतं मनो न प्रतीन्द्रियमेकैकम्।

योऽयमात्मा ज्ञानाश्रयः प्रत्यगात्मतया साधितः स स्वसंवेद्य ऐवेति परत्र यज्ञदत्तादिष्वपि तज्जातीय एवात्मेति साधनार्थमात्मसामान्यलिङ्गान्याह—

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥४॥**

तत्र प्राणापाननिमेषोन्मेषजीवनानि चोदनानिमित्तानि न बुद्धिपूर्वाणीति। मनोगत्यादय आत्मधर्माः कामतः प्रवृत्ता बुद्ध्यधीनाः। प्राणापानौ श्वासप्रश्वासौ प्रसिद्धौ सामान्यतो

दृष्टमात्मनि लिङ्गम् । निमेषोन्मेषौ नेत्रपक्ष्मणोश्चलनमात्मनि प्रसिद्धं लिङ्गम् । समस्तेन्द्रियवृत्तिप्राणादिलक्षणोपचयापचयादि-शरीरधर्माश्च जीवनं, सर्वात्मसु सामान्यतो दृष्टं प्रत्यक्षं लिङ्गम् । मनोगतिरिन्द्रियार्थग्रहणं, गृहीतानां संस्मृत्य विमृश्य संकल्पनं विकल्पनं च । वस्तुगतरूपादिगुणदर्शनेन पूर्वानुभूतेन्द्रियान्तर-ग्राह्यस्य रसादिसहचारिगुणस्य ग्रहणमिन्द्रियान्तरविकारः, आत्मनि लिङ्गम् ।

सुखादयः प्रसिद्धा आत्मगुणाः । एषामात्मवत्स्वेव दर्शनाद-नात्मवत्सु चादर्शनादात्मनि लिङ्गत्वमिति ।

**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥५॥**

क्रियागुणवत्वाद् द्रव्यान्तरानाश्रितत्वाच्च द्रव्यमात्मा नित्यश्च ।

अत्र केचिद् वैदिकंमन्याः श्रुतिमपार्थीकृत्य दुर्व्याख्यातश्रुति-बलेन च वैदिकादात्मैक्यविज्ञानादन्यान्निःश्रेयससाधनं नास्तीति प्रलपन्तः स्मृतिमपलपन्ति । तद् भ्रान्तिनिवारणार्थं प्रकरणारम्भः ।

संदिग्धलिङ्गान्येतानि नात्मानमवधारयन्तीत्याक्षिपन्नाह ।

**यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥६॥**

आत्मेन्द्रियशरीरसमुदायो यज्ञदत्तः । तत्रात्माऽप्रत्यक्षः । प्रत्यक्षं तु शरीरम् । प्राणापानादीनामात्मना सम्बन्धस्याप्रत्यक्ष-त्वाच्चैषामदृष्टलिङ्गत्वमात्मनि । शरीरे त्वेषां सम्बन्धस्य प्रत्यक्ष-त्वाच्छरीरलिङ्गान्येतानि स्युः । सति दृष्टेऽदृष्टार्थकल्पनाया अनौ-

चित्यादिति। पुनः—

**सामान्यतो दृष्टाच्चाविशेषः ॥७॥**

न चात्मनोऽप्रत्यक्षं नैमित्तिकम्। यज्ञदत्तविष्णुमित्रादिषु सर्वत्र सामान्येनादृष्टः प्राणापानादिलिङ्गानामात्मना सह सम्बन्ध इत्यात्मनि दृष्टं लिङ्गं न विद्यते।

**तस्मादागमिकः ॥८॥**

तस्माद् वेदादेवात्मज्ञानं न दर्शनेनेति। तत्र समाधत्ते—

**अहमिति शब्दस्यव्यतिरेकान्नागमिकम् ॥९॥**

आत्मज्ञानमिति शेषः। अस्त्यहमिति सर्वसाधारण आत्मवतां प्रत्ययः। स चाहंशब्दो व्यतिरेकेणात्मनि विद्यते। न तद्-व्यतिरिक्ते द्रव्यान्तरे शरीरादौ। तस्माल्लैङ्गिकमात्मज्ञानं न केवला-गमिकमिति। पुनराशङ्कते —

**यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥१०॥**

यदीति पक्षान्तरे शब्दः। बाह्यार्थस्येन्द्रियसन्निकर्षात् प्रत्य-क्तया निष्पन्नं ज्ञानं प्रत्यक्षम्। आत्मसंयोगात् प्राक्तया संवे-दनमन्वक्षं ज्ञानमपि प्रत्यक्षमेव।

अत्रेदं बोध्यं आत्मा द्रष्टा। विषयो दृश्यं। ज्ञानं दर्शनं सा दृष्टिरिति त्रिपुटं ज्ञानमुक्तम्। तत्र प्रत्यक्षज्ञानमपि दृष्टिर-न्वक्षमपि दृष्टिरित्युभयथाऽत्मनिष्ठा दृष्टिः। तत्र यदुक्तमहमिति व्यतिरेकेणात्मनि शब्दस्तन्न युज्यते। अहं देवदत्तोऽहं यज्ञदत्तो ऽहं काणोऽहं खञ्ज इत्यन्वक्षमहं शब्दस्य पक्षान्तरे शरीरे शक्ति-

ग्रहादिति । समाधत्ते—

**दृष्ट्यात्मनि लिङ्गे एक एव दृढ़त्वात् प्रत्यक्षवत्प्रत्ययः ॥११॥**

अहमित्यन्वक्षः प्रत्ययोऽत्र दृष्टिरुक्ता । तदेव च लिङ्गम् । तत्र दृष्ट्यात्मकं लिङ्गमहमिति सर्वेषां सर्वावस्थास्वेक एव प्रत्यगात्मनि दृढो नित्यश्च प्रत्ययो विद्यते । शरीरे त्वहं प्रत्ययोऽदृढोऽनित्यः सम्बन्धमात्रादौपाधिकः । मम शरीरमित्यात्मशरीरयोः सम्बन्धग्रहणाद् व्यतिरेकदर्शनात् । न चाहमिति द्वौ प्रत्ययौ सम्भवतः । तस्मादहमित्येक एव प्रत्यगात्मनि दृढः प्रत्ययः । स चान्वक्षोऽनुमानानपेक्षत्वात्प्रत्यक्षवदुक्तः ।

तदेतद् प्रत्यगात्मनि प्रमाणमुक्तम् । परत्र देवदत्तादेरात्मनि तु नोपपद्यतेऽहमिति लिङ्गस्य तत्रानुपलब्धेः । प्राणापानादिलिङ्गानामपि तत्र साक्षाच्छरीरसम्बन्धदर्शनाच्च शरीरे लिङ्गत्वं स्यात् नात्मनि । तत्राह—

**देवदत्तो गच्छति यज्ञदत्तो गच्छति इत्युपचाराच्छरीरे प्रत्ययः ॥१२॥**

गमिरिह प्रयत्नार्थः श्वासप्रश्वासादिलिङ्गोपलक्षकश्च । उदाहरणद्वयं तु सामान्यतोदृष्टार्थम् । यत्तु देवदत्तादीनां गमनं तत्र प्रयत्नस्य श्वासप्रश्वासादीनां च लिङ्गानां शरीरे प्रत्यक्षग्रहणं तदौपचारिकं, मुख्यं त्वात्मन्येव । तत्राशङ्कते—

**संदिग्धस्तूपचारः ॥१३॥**

संसृष्टयोरेकतरस्मिन् विद्यमानोऽर्थः इतरस्मिन्नुपचरन् गृह्यते स उपचारः। तत्र गृह्यमाणार्थस्याश्रयो मुख्यः। यस्मिंश्चोपचरन् प्रतीयते स गौणो योग्यश्चोक्तः। तत्र प्रयत्नादीनां मुख्याश्रय आत्मा वा शरीरं वेति संदिह्यते।

**अहमिति प्रत्यगात्मनि भावात्परत्राभावादर्थान्तरप्रत्यक्षः ॥१४॥**

देवदत्तस्याहमिति प्रत्ययस्य प्रत्यगात्मनि नित्यो भावः शरीरे त्वौपचारिक इत्युक्तम्। स च भावः सर्वत्र देवदत्तादिषु समानः। द्रष्टुर्यज्ञदत्तस्य तावद् देवदत्तस्य शरीरे गमनप्रत्यक्षः। तत्र कतरो मुख्यो गन्ताऽत्मा शरीरं वेति सन्देह आह—द्रष्टुर्यज्ञदत्तस्यार्थान्तरप्रत्यक्षो न मुख्यगन्तृप्रत्यक्षः। आत्मनोऽर्थान्तरं हि शरीरमिति।

**देवदत्तो गच्छति इत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहंकारः ॥१५॥**

देवदत्त आह 'अहं गच्छामीति' सो अहमित्यात्मानमाह। द्रष्टा श्रोता च यज्ञदत्तस्तावदुपचारात् अहमितिशब्देन देवदत्तस्य शरीरं विवक्षितं मन्यते। इत्यन्यथाभूतमन्यथा मन्यत इत्यभिमानोऽयम्। सोऽयमहंस्थाने शरीरप्रत्यक्षोऽहंकारो नायमहंप्रत्यक्षः।

**संदिग्धस्तूपचार ॥१६॥**

यस्मादौपचारिकोऽहंकारस्तस्मात् संदिग्धो नात्मनि लिङ्गमव-

धारयति । असांदिग्धस्त्वहंप्रत्ययस्तस्मात् आत्मनि लिङ्गम् ।

**न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ॥१७॥**

अत्रात्मसाधनेऽहमिति प्रत्ययो लिङ्गत्वेन विषयीक्रियते । न तु यज्ञदत्तविष्णुमित्रयोर्भिन्नशरीरयोरितरेतरस्य ज्ञानं लिङ्गत्वेन विषयीक्रियत इत्यर्थः ।

**अहमिति मुख्ययोग्याभ्यां शब्दव्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः ॥१८॥**

स चाहं शब्दः सर्वेषां प्रत्यगात्मनि मुख्यः शरीरे तु योग्यो गौण इति व्यतिरेकेण स्फुटं गृह्यते, नह्यत्र कश्चिद् व्यभिचारोऽस्ति । तस्मादहमित्यात्मनो वैशेषिकं लिङ्गम् । तस्माल्लिङ्गादात्मनो विशेषसिद्धेरानुमानिक आत्मा नागमिक इति । एतेनात्मन्युक्तसर्वलिङ्गोपपत्तिरुक्ता ।

आम्नायप्रतिपादितमात्म्यैक्यवादमुपपादयन्नाह—

**सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥१९॥**

सर्वत्र चैत्रमैत्रादिष्वहंप्रत्ययसामान्यात्, पश्यति जिघ्रति मनुत इत्यादि ज्ञाननिष्पत्तिसामान्यात्, सुखदुःखाद्युपलब्धिसामान्याच्च सर्वात्मस्वेक एवात्मा गम्यते विशेषानुपलब्धेः । तत्कथं चैत्रमैत्रादिभेदेनैकस्यैवात्मनो नानात्वप्रात्तिपतिरित्याह ।

**व्यवस्थातो नाना ॥२०॥**

आत्मनि या नानात्वप्रतीतिः सा व्यवस्थातो भवति न स्व-

रूपतः । केयं व्यवस्थेति ? त्रिधा हि पदार्थेषु नानात्वमुपपद्यते । तात्त्विकं नानात्वं परिणामात् । यथैक एवाहंकारो गुणपरिणामात्पृथिव्यादिपञ्चभूतरूपैर्नाना भवति । आरम्भणात्, यथा पृथिवीप्रभृतयः परमाणवः संयुक्तसमवायेन कार्यरूपैर्नाना भवन्ति । तदेतत्कारणभेदकृतं पदार्थेषु स्वरूपनानात्वमुक्तम् । निमित्त वशाद् याऽवस्थानविशेषप्रपात्तिः सा व्यवस्था, तत्कृतं नानात्वं नैमित्तिकं न स्वरूपगतं, यथा एक एव शब्दो निमित्तमात्रान्नानात्वं प्रपद्यते न कारणविशेषात्परिणामादिति ।

कर्मादिनिमित्ताद् विविधसंस्थानानि शरीराणि । शरीरं शरीरं प्रत्यात्मेति प्रतिशरीरनियमात् स्वरूपत एकोपि सन्नात्मा नानात्वेन गृह्यत उपाधिनिमित्तात् । तथा च पृथगन्तरात्मा विराडुपाधिनिमित्तात् । पृथगात्मानौ देवदत्तविष्णुमित्रयोः शरीरपार्थक्यात् । नाना च केवलिनोऽव्यक्तोपाधिनिमित्तात् तदेतद् व्यवस्थातो नानात्वमात्मनो भवति न स्वरूपत इत्यैकात्म्यम् । स एक आत्मेश्वरस्तद् ब्रह्मेति ।

आम्नायोक्तार्थोद्बलनार्थं स्मृतिरुपक्रान्तेति तत्सामर्थ्येनोप संहरति—

**शास्त्रसामर्थ्याच्च ॥२१॥**

तथा चाम्नातमैकात्म्यम्— **अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ॥ एकस्तथा सर्वभूतान्तरात्मा । रूपं रूपं प्रतिरूपो बहिश्चेति ॥** (कठ. २,५,८) ॥ प्राणिषु बहि

रधिदैवेऽपीति चकारार्थः। अपि **चायमात्मा ब्रह्म** इत्यादि श्रुतिसन्दोहेन ब्रह्मात्मैक्यं व्यतिरेकेण प्रतिपादितम्।

त्रिपर्वां ह्यस्यात्मनः क्रमेण श्रुतयो गतिं प्रतिपादयन्ति। अपुनरावर्ति ब्राह्मं पदं, सा श्रेयसः पराकाष्ठेति निश्रेयसमुक्तम् महत्तत्वाद्विमोक्षोऽस्य कैवल्यं, कारणशरीरादव्यक्तान्मोक्षोऽस्य ब्रह्मणि लयोऽमृतत्वं तदेवैकात्म्यमाहुः॥

इति तृतीये द्वितीयाह्निकम्।

## अथ चतुर्थाध्याये प्रथमाह्निकम्

परीक्षितानि द्रव्याणि। तत्र पृथिव्याद्यारम्भकद्रव्याणां स्थूलं स्वरूपं चेति रूपद्वयं निरूपितम्। तत्प्रसंगेन तेषां समवायिगुणाश्च निरूपिताः। इदानीमेषां भूतानां सूक्ष्मरूपविवेचनपूर्वकं सूक्ष्मेभ्यः स्वरूपारम्भोऽस्मिन्नध्याये विचार्यते। तत्राप्येषां सूक्ष्म रूपावधारणं प्रथमाह्निकविषयः।

एकस्यैव दर्शनस्य प्रतिपत्तिविधिविशेषात् प्रमेयविशेषाच्च योगवैशेषिकभूमिभ्यां विभक्तस्य वैशेषिकभूम्यवतारार्थं योगदर्शनेन सम्बन्धं स्थापयन्नाह—

**सदकारणवन्नित्यम् ॥१॥**

अस्त्यस्य जगतो मूलकारणं किञ्चित्तत्त्वं[1] तत्सदुच्यते।

---

१. The absolute substance or the 'Thing-in-itself' apart from its attributes.

तत्स्वयंसिद्धं, तस्य नास्ति कारणमित्यकारणवदुक्तम् । जगतः कारणं सदप्यनुत्पत्तिधर्मकमविनाशि चेति नित्यमुक्तम् । चितो व्यतिरिक्तं वस्तुस्वरूपात्मकमिति सदुक्तम् । योगेनाप्यस्य साक्षाद् ग्रहणं न सम्भवतीत्यव्यक्तं तस्मादेवालिङ्गमप्युक्तम् । केवलमनुमानगम्यत्वादानुमानिकम् । जगत उपादानकारणत्वात्प्रधानं प्रकृतिश्चोच्यते । तत्सत्त्वे प्रमाणमाह—

**तस्य कार्यं लिङ्गम् ।।२।।**

यदिदं जगत्तत्कार्यात्मकं विद्यते तदिदं सत्कार्यं सदात्मकमेव कारणं गमयति ।

**कारणाभावात्कार्याभावः ।।३।।**

कार्यस्य कारणेनावश्यं भवितव्यमित्यस्त्यस्य जगत्कार्यभूतस्य कारणं तत्सदिति ।

तस्य सत्वरजस्तमांसीति त्रयो गुणा उक्ताः। तस्मिन् गुणपरिणामान्महत्तत्त्वं, तस्मादहंकारस्तस्माच्चाकाशादिपञ्चभूतानि जायन्ते। तान्येवास्मिन् तत्त्वपरिणामेऽन्त्या विशेषा उच्यन्ते । एषां महदादिविशेषान्तानां सांख्येन विधिना साक्षात्कारो भवतीत्येषा दर्शनस्य योगभूमिरुक्ता ।

अस्यां भूमिकायां तत्त्वतः प्रधानस्यैव पारमार्थिकं नित्यत्वमस्ति । तदधस्तनानां महत्तत्वादिविशेषान्तानां तत्कार्यत्वान्नित्यत्वप्रतिषेधः । वैशेषिकभूमिकायां तु विशेषानारभ्य सृष्टिप्रतिपादनम् । अत्र नित्यत्वव्यस्थाऽपि पारिणामिकी गृह्यते तन्त्रानु-

रोधादित्याह—

अनित्य इति विशेषतः प्रतिषेधभावः ॥४॥

अस्मिन् तन्त्रे तु पूर्वोक्तोऽन्त्यविशेषो नित्योऽभ्युपगम्यते। कार्येषु सर्वत्र तस्य स्वरूपहान्यभावात्। विशेषादधस्तनानां स्थूलस्वरूपाणां तत्कार्यत्वादनित्यत्वमुद्दिष्टम्। विशेषान् ह्यधिकृत्येदं प्रवृत्तं वैशेषिकतन्त्रमिति। यत्तु कैश्चित् परमाणोः पारमार्थिकां नित्यतामभिप्रेत्य परमाणुकारणवादोऽपलप्यते धौर्त्यमात्रं तत्। सद्भूतस्य विवक्षितस्य चाप्यर्थस्य छलादिकुतर्कैः खण्डनं पाखण्डः। तदेतत् पाखण्डेषु प्रवर्तनं स्वपक्षदोषदुष्टानां कल्याचार्याणां बहुलः समाचारः। हेयं तत्त्वबुभुत्सुभिरिति दिक्।

अथ विशेषादुपरितनानामहंकारादीनां कस्मादत्रापरिग्रहणमित्याह—

अविद्या ॥५॥

दृष्टाददृष्टप्रतिपत्तिरिति दर्शनस्य वैशेषिको मार्ग उक्तः। सामान्यात्कार्याद्धि अत्र कारणानि विशेषा अनुमीयन्त इति। तत्र प्रत्यक्षज्ञानमुपलब्धिः। आनुमानिकं ज्ञानं प्रतिपत्तिः। उभयं विद्या। तेन लौकिकप्रत्यक्षतत्पूर्वकानुमानजन्यं यावच्छक्यमसंदिग्धं च ज्ञानं साऽत्र विद्या। सा चाऽनेन मार्गेण विशेषान्तमेव सम्भवति न तदुपरितनानामहंकारादीनामित्यविषयोऽस्य शास्त्रस्य।

उपलब्धिपूर्वकं हि लैङ्गिकं ज्ञानमुपक्रम्यते। ततश्चलिङ्गानुक्लृप्तिपरम्परया प्रवर्तत आविप्लवात्। नित्यानित्यभेदात् द्विविधा ह्यनुपलब्धिः। अनित्या तावदिन्द्रियदोषात् संस्कारदोषाच्च।

तानि चानुपलब्धिनिमित्तानि — अतिदूरादतिसामीप्यान्मनोऽनवस्थानाद् व्यवधानादभिभवात्समानाभिहाराच्चेत्यादीनि । परमाण्वाद्यर्थानामतिसौक्ष्म्यात्संस्काराणामग्राह्यत्वाद् यत्स्वभावत एवेन्द्रियैरग्रहणं सा नित्याऽनुपलब्धिः ।

तत्राप्युपलब्धिहेतूनामभावेऽनुपलब्धिरित्युपलब्धिनियमं प्राधान्याच्चाक्षुषत्वाच्च रूपोदाहरणेनाह—

**महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः ॥६॥**

सूक्ष्मैः परमाणुभिः स्वरूपारम्भः । स्वरूपभूतानां पुनर्नास्ति समवायनियमः । तेषां संयोगमात्रेणारब्धं कार्यं भूतानां स्थूलं रूपं भवति । स प्रचय उच्यते । अत्र पृथिव्या विशेषो विद्यते । पृथिवीस्वरूपाणां पाकजसंयोगेन स्थूलारम्भः ।

द्विविधः पृथिवीस्वरूपाणूनां संयोगः । साक्षात्पिठराणां प्रचयः । यथा सुवर्णपिठराणां प्रचयः सुवर्णखण्ड इति । आदौ पृथिवीपिठराणां पाकजसंयोगन पाकाण्वारम्भः । पाकाणूनां पुनः सामान्यसंयोगात्प्रचयः । यथा काष्ठपाषाणादि । अप्तेजोवायुस्वरूपाणां पाकजसंयोगो नास्ति । तस्मादेषामेक एव साक्षात् स्वरूपप्रचयः । तत् तेषां स्थूलं रूपम् ।

परमाणुसमवायेन स्वरूपारम्भः । एवं परमाणुगुणैः स्वरूपगुणारम्भः । तत्रापि समवायिगतसूक्ष्मगुणसंस्कारा एव समवेतानां सजातीयगुणसंस्कारैः सन्निकर्षादुत्कृष्य विशेषं नीयन्ते । न समवेतानां संस्काराः स्वातन्त्र्येण प्रादुर्भवन्ति । यथा वायुसम-

वायिकारणके विद्युदणौ रूपवत्तेजःसंयोगे सत्यपि रूपोत्पत्तिर्नास्ति। यः समवेतानां सजातीयसंस्कारसन्निकर्षात्समवायिनः संस्कार उत्कृष्यते स विशेषसंस्कारः स्वरूपे वैशेषिकगुण उक्तः। यस्मात्समवायो धर्मस्तस्माद् धर्मकृतोऽयं विशेषो भवति।

यद्यपि पाकजसंयोगे आश्रयाश्रयिनियमाभावात् समवायो नास्ति। तथापि पिठराणां दिग्देशविशेषेणावस्थानात् पाकजेष्वपि संस्थानलक्षणो धर्मविशेषो भवत्येव। तद्विशेषात्कारणगुणसन्निकर्षाद् गुणेऽपि धर्मविशेषो जायत इत्यत्रापि धर्मकृतो विशेषः। एवं द्रव्यधर्मभेदाद् गुणधर्मभेदस्तस्माच्च गुणाविशेषादुपलब्धिनियमः। तथा चोक्तं गौतमीये—**द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः** (न्या. द. ३,१,३८) इति।

सूक्ष्मगुणेभ्यः सन्निकर्षात् स्वरूपगुणनिष्पत्तिरुक्ता। तत्रेन्द्रियार्थसंस्कारयोः सन्निकर्षादुपलब्धिरिति तत्सन्निकर्षो विचार्यते।

संस्कारस्वरूपं तद्विशेषाश्चोक्ताः (१,१,१३)। तदेतत्सर्वं सर्वसंस्कारेषु समानम्। केवलाश्रयभेदाद्विशेषः। क्रियासंस्काराणां संयोगमण्डलमाश्रयः। गुणसंस्काराणामाकाश[1] आश्रयः। ज्ञानसंस्काराणामिन्द्रियसत्त्वमाश्रयः, एतावानेव विशेष इति। नियतगतिविस्तारगोचरो हीन्द्रियसंस्कारो विज्ञायते। नानागतिविस्ताराश्चार्थसंस्कारा रूपनानात्वदर्शनात्। तत्र परमाणुरूपसंस्कारस्याणुतमत्वादगोचरत्वान्नास्तीन्द्रियसंस्कारेण सन्निकर्षस्ततश्चा-

---

१. Medium of wave-motion.

ग्रहणम् । स्वरूपसंस्कारस्य विशेषाद् गोचरस्थत्वाच्च यद्यपीन्द्रिय-संस्कारेण सम्भवति सन्निकर्षस्तथापि तस्याणुत्वान्नास्ति प्रतिपत्तिः। यथायथाऽणुप्रचयाद् द्रव्यमहत्वं जायते तथा तथा संस्कारमहत्वे जाते रूपरश्मिरपि महीयते । इत्थमनेकद्रव्यवत्त्वेन रूपमहत्त्वे जाते उपलब्धिर्भवति ।

**सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद् वायोर-नुपलब्धिः ॥७॥**

जात्यभिप्रायेण द्रव्यत्वमित्यनेकद्रव्यवत्त्वमुच्यते, **अनेक-द्रव्यवत्त्वाद् द्रव्यत्वमुक्त**मिति वचनात् । तेन सर्ववायूनां ग्रह-णम् । सत्यपि वायोरनेकद्रव्यवत्त्वे ततश्च महत्त्वे वायो रूपानु-पलब्धौ वायुपरमाणौ सूक्ष्मोऽपि रूपसंस्कारो नास्तीति गम्यते । सूक्ष्मेऽपि वायौ रूपं नास्ति कुतस्तु स्वरूपे तस्य सम्भवः ।

**अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥८॥**

चकारो महत्त्वसमुच्चयार्थम् । तदित्थं सूक्ष्मे सूक्ष्मं रूपं भवति । सूक्ष्माणां समवायात् स्वरूपे रूपाविशेषो जायते । स्वरूपाणां संयोगे रूपरश्मिमहत्त्वं जायते । ततश्चोपलब्धिः ।

**तेन रसगंधस्पर्शेषु ज्ञानं व्याख्यातम् ॥९॥**

अबादिपरमाणौ सूक्ष्मो गुणः । समवायात्स्वरूपे गुणाविशेषः । स्वरूपाणां संयोगे गुणविशेषाणां बहुत्वान्महान् गुणः । गुणमहत्त्वे चोपलब्धिरिति रसादिसंस्कारात्मकगुणेषु सर्वत्रायमेवोपलब्धिनियमो वेदितव्यः ।

**तस्याभावादव्यभिचारः ॥१०॥**

उक्तोपलब्धिहेतूनामभावे सतोऽप्यर्थस्य क्वचिदुपलब्धिर्न सम्भवति, तत्रार्थोऽपि नास्तीति न वाच्यं भवति। **नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः** (न्या सू. ३,१,३७) इति नियमात्। तस्मादस्ति अनुमानगम्यं जगतः कारणं परमाणुः। अस्ति च तस्यापि कारणं किञ्चित्तत्त्वं तत्सदिति शास्त्रप्रसिद्धं प्रतिपद्यते। किन्तु तस्य वैशेषिकं ज्ञानं न सम्भवतीति तस्य येऽन्त्या विशेषाः परमाणवः तावन्मात्रोऽत्र विषयः।

लैंगिकं ह्यत्र तन्त्रे ज्ञानमाश्रियते। प्रत्यक्षेण च लिङ्गेन भवितव्यम्। तत्र रूपादीनां संस्कारात्मनामिन्द्रियसन्निकर्षेण प्रत्यक्षनिष्पत्तिरुक्ता। तत्रापीन्द्रियाणामेकैकगुणग्राहकत्वं प्रदर्शितम्। शेषाणां संख्यादीनामसंस्कारत्वान्नोपपद्यते इन्द्रियसन्निकर्षः। तस्मात्तेषामप्रत्यक्षत्वापत्तिः। तस्माच्चालिङ्गत्वं प्रसक्तमित्यत आह—

**संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायात् चाक्षुषाणि ॥११॥**

चाक्षुषमिति स्पार्शनस्याप्युपलक्षकम्। संख्यादीनामपि ज्ञानं प्रत्यक्षमेव। तच्च प्रत्यक्षं चाक्षुषं स्पार्शनं वा। तस्मादेषां प्रसिद्धलिङ्गत्वमिति।

ननु रूपमात्रं हि चक्षुषा गृह्यते। रूपं तावत् संस्कारात्मकं संस्कारात्मकेनेन्द्रियेण सन्निकर्षाद् गृह्यते। संख्यादीनाम-

संस्कारान्नोपपद्यते सन्निकर्षः । तस्मादेषां लैंगिकमेव ज्ञानं नैन्द्रियकं प्रत्यक्षमिति चेन्न । सर्वस्यापि प्रत्यक्षस्य क्रमेण प्रतिपत्तिर्भवति । स च क्रमः कालकृतो देशकृतो वा । गुणस्तत्क्रमश्चोभौ द्रव्यसमवेतौ । तत्र गुणस्येन्द्रियेण ग्रहणं, क्रमस्तु बुद्धिनिर्ग्राह्यः । तस्माद् ऐन्द्रियकमसदपि बुद्ध्यपेक्षमुक्तं क्रमप्रत्यक्षम् ।

एकदेशे स्थितस्य घटरूपस्य क्षणक्रमेण ग्रहणं जायते । प्रथमक्षणे प्रथमं रूपं द्वितीयक्षण द्वितीयं, तृतीये तृतीयमित्यादि क्रमेणाध्वभिः गृह्यमाणानां प्रत्ययानामाशुसंचारादेकमेव दीर्घकालव्यापि रूपं गृह्यते । तच्च रूपैकत्वं क्रमकृतं बुद्ध्या गृह्यते नहि तत्रैकत्वप्रतिपत्तौ हेत्वन्तरं विद्यते ।

एवं रूपादि प्रत्यक्षे देशकृतः क्रमोऽपि सहैव बुद्ध्या गृह्यते । एकदेशेस्थितमेकं घटरूपं द्वितीये द्वितीयं तृतीये तृतीयमिति देशभेदात् त्रयाणां प्रत्यक्षम् । सा संख्या । एवं देशक्रमेण गृह्यमाणरूपेण सहैव परिमाणं, पृथक्त्वं, परत्वमपरत्वं चेत्येतेषां गुणानां बौद्धं प्रत्यक्षं जायते ।

यत्र रूपादिप्रत्यक्षे उभौ क्रमौ युगपद् गृह्येते । तत्र संयोगविभागगमनादीनां चाक्षुषं प्रत्यक्षं जायते। तदिदं बुद्ध्यपेक्षं गुणेषु क्रमप्रत्यक्षं स्पार्शनमप्येवमेव जायते । इत्थं संख्यादीनां प्रत्यक्षमेवज्ञानमुक्तं न लैङ्गिकमिति ।

अरूपिष्वचाक्षुषाणि ॥१२॥

येषां द्रव्याणां रूपग्रहणं नास्ति तेषु ते गुणा यथायोगं

विद्यमाना अपि चक्षुषा नैव गृह्यन्ते। तेषामनुमानेन प्रतिपत्तिः। अरूपिणि वायौ नैतानि चाक्षुषाणि सम्भवन्ति। तत्र यथासम्भवं स्पार्शनानि द्रष्टव्यानि।

**एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥१३॥**

गुणग्रहणेन गुणिग्रहणमपीतिन्यायात् स्थूलगुणग्रहणेन कार्यद्रव्योपलब्धिरितिकार्यकारणपरम्परया लैङ्गिकेन विधिना विशेषाणां कारणानां तद्गुणानां च प्रतिपत्तिः।

सर्वे गुणाः प्रत्यक्षाः, कर्मापि प्रत्यक्षं, तदाश्रयस्य द्रव्यस्यापि बुद्ध्यपेक्षं प्रत्यक्षम्। इत्थं गुणत्वे गुणिसद्भावे च सर्वेन्द्रियं प्रत्यक्षज्ञानमुक्तं ततश्चैषां प्रसिद्धलिङ्गत्वमपीतिसिद्धम्।

इति चतुर्थे प्रथमाह्निकम्।

## अथ चतुर्थाध्याये द्वितीयाह्निकम्

स्थूलं स्वरूपं सूक्ष्मं चेति त्रिरूपं द्रव्यमुक्तम्। सूक्ष्माणां समवाये धर्मविशेषात्स्वरूपारम्भः। स्वरूपाणां संयोगे महत्त्वविशेषात्स्थूलारम्भः। तत्र द्रव्याणां स्वरूपरूपं परीक्षितम्। स्वरूपेभ्यः स्थूलारम्भश्च परिक्षितः। इदानीं सूक्ष्मेभ्यः स्वरूपारम्भः परीक्ष्यते।

**तत्पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥१॥**

तदिति पूर्वनिरूपितं स्वरूपं कार्यद्रव्यं परामृश्यते। पुन-

रिति प्रकरणभेदे शब्दः। स्वरूपेभ्यः स्थूलारम्भः पूर्वप्रकरणे उक्तः। इदानीं सूक्ष्मेभ्यः स्वरूपारम्भः प्रक्रियत इति प्रकरणभेदः।

स्वरूपद्रव्यस्यैको भागोऽणुः। तथा सूक्ष्मस्यैको भागः परमाणुरिति विवेकः। नानाधर्मविशिष्टाः स्वरूपाणवो दृश्यन्ते। न परमाणूनां यादृच्छिकसंयोगमात्रेणैषु धर्मनियम उपपद्यते। तदर्थमण्वारम्भे परमाणूनां संयोगविशेषोऽभ्युपगम्यते। कस्तत्र विशेष इति। संयुक्तयोराश्रयाश्रयिभावेन सम्बन्धः। सः समवायः। समवायेन परमाणवोऽणुमारभन्ते। न सामान्यसंयोगमात्रेणेत्युक्तम्।

परमाणुद्वयसंयोगे समान उभयोः संयोगः। कथं तत्राश्रयाश्रयिभावोपपत्तिरित्युच्यते। नित्यगमनशीला परमाणवो नियतगत्याऽभिमुख्येन गच्छन्ति। एवं गच्छन् परमाणुर्यदा मार्गे परमाण्वन्तरसंयोगमण्डलं स्पृशति तदा तेनावक्षिप्तो युगपद् गमनावक्षेपणकर्मद्वयसंस्कारात्तं परितो भ्रमणं प्रपद्यते चन्द्रो यथा पृथिवीम्। तत्र यं परितः स भ्रमति स आश्रयः स समवायी। यश्च भ्रमन्नास्ते स आश्रयी स संयोग्युच्यते। एवं विधेनैव सन्निवेशेनाश्रयाश्रयिभावोपपत्तिः। नह्यत्र कल्पान्तरं सम्भवति।

यत्रास्मिन् समवाये एक एव परमाणुः समवायी भवति सोऽणुरेकार्थसमवायी भवति। समवायिनोऽप्यत्र नित्यगमनवत्त्वादयमणुः पर्यटक उक्तः स्थैर्याभावात्।

अथैकार्थसमवायिनोऽणोः स्थैर्यासम्भवात् कथं सुवर्णरज-

ताद्यणूनां स्थैर्योपपत्तिरित्युच्यते। सजातीयौ परमाणू आभिमुख्येन संयुक्तौ द्व्यणुकमुच्यते। तयोर्दिग्विरोधाद् द्व्यणुकस्य स्थैर्यं जायते। एवं द्व्यणुकत्र्यणुकचतुरणकादीनामपि स्थैर्यमवगन्तव्यम्। तेनानेकार्थसमवायिनोऽणोः सर्वत्र स्थैर्यमवगन्तव्यम्। नास्य पर्यटकत्वं सम्भवतीत्यस्मिन् गमनाभावादुत्क्षेपणादवक्षेपणादेव वा चलनोपपत्तिर्न गमनादित्यस्य चलनं लोकलोकान्तरसञ्चारस्तु गुरुत्वादेवभवतीत्यनुसन्धेयम्। एवं चैकार्थसमवायिनो नित्यं गमनम्। न तस्य स्थैर्यमुपपद्यते। तस्य चलनं लोकलोकान्तरसञ्चारस्तु गमनादेवोपपद्यते। एतेऽणवोऽश्नुवन्त्यध्वानमित्यश्वाः, किरणात् किरणाः, खे दयन्त आकाशे गच्छन्तीति खेदय उच्यन्ते। एवमन्येऽप्यत्र निगमा अनुसन्धेयाः।

एषां स्वरूपाणूनां समवाय्यसमवायिनोर्जातिसंख्यावच्छेदान्नाना विकल्पाः सम्भवन्ति। तत्र पृथिवीसमवायिकारणकमणुमसमवायिभेदाद् विभजन्नाह—

पृथिव्येवादिकारणं यस्याणोः सः पृथिव्यादिरणुः, पृथिव्यात्मकः पृथिवीप्रकृतिकश्चेति यावत्। समवायिकारणं ह्यादिकारणमुक्तमिति। स पृथिव्याद्यणुरेकप्रकृतिकोऽपि सन् संयोगिभेदात् त्रिविधो भवति रचनाविशेषात्। अन्यविधो विषयारम्भकोऽणुरन्यविधश्च शरीरारम्भकोऽन्यश्चेन्द्रियाणुः स्वरूपभेदात्।

संयोगिभेदविशेषात् त्रिविधस्याप्यणोरेकप्रकृतिकत्वमाह —

**प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्पञ्चात्मकं**

न विद्यते ॥२॥

स्वरूपद्रव्यमिति शेषः । अत्र चतुरात्मकमित्येव सुवचमासी-त्तथापि पञ्चग्रहणं त्वाकाशे संयोगाभावात्तत्समवायित्वप्रतिषेधार्थं कृतं नाऽकाशप्रतिषेधार्थम् । तस्यापरिहार्यत्वादसमवायिकारणत्वं-त्वस्त्येव । संयोगवतस्तु वायोरेवाभावः सूचितस्तत्संयोगस्याप्रत्यक्ष-त्वादित्यभिप्रायः ।

सजातीयसंयोगो गुरुत्वम् । तच्च चाक्षुषम् । पुनः समवा-यिगुणपूर्वक कार्यगुणो भवति । यदि सुवर्णरजतादिकार्यद्रव्याणां समवायिकारणं पञ्चभूतसमूहात्मकं स्यात्तस्य तत्र तत्र स्वभूमिं प्रति गुरुत्वं प्रत्यक्षं स्यात् । आकाशात्मकत्वात् तेषां गुरुत्वाभावो दृश्येताकाशस्य संयोगाभावात । वाय्वात्मकत्वान्मेरुं प्रति तेषां गुरुत्वात्तिर्यग्गमनमुपलभ्येत । तेजःप्रकृतिकत्वादूर्ध्वगमनं स्यात् । तत्तु नास्ति नापि सम्भवति । तस्मात् सुवर्णादिपिठराणां समवायिकारणं पञ्चभूतसमूहात्मकं न सम्भवति । एवं न वायुसंगृहीतं न तेजःप्रकृतिकमेषां समवायिकारणं सम्भवति । समवायिन एकप्रकृतित्वे हेत्वन्तरमाह—

गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥३॥

अथाप्पृथिवीतिद्विप्रकृतिकं समवायिकारणं स्यात् तयोर्गुरु-त्वप्रत्यक्षादित्यपि नोपपद्यते गुणान्तराप्रादुर्भावात् । अप्पृथिव्योः रससान्निकर्षात् सुवर्णादिषु रसविशेष उपलभ्येत । न चोपलभ्यत इति न द्व्यात्मकत्वं सुवर्णादीनां समवायी । केवलेन संयोगा

प्रत्यक्षेण हेतुनाऽकाशं व्युदस्तम् । केवलेन गुणान्तराप्रादुर्भावेन हेतुनाऽपां व्यावृत्तिः । वायुतेजसोरुभाभ्यां हेतुभ्यां प्रतिषेध इति चकारशब्दार्थस्तस्मादेकप्रकृतिको भवति समवायः ।

तेन पृथिव्यणुः केवलपृथिवीसमवायिकारणक एव भवति नानेकप्रकृतिकः । एतेनाबाद्यणूनामप्येकात्मकत्वं व्याख्यातं भवति ।

अथ लोके शास्त्रे च जगतः शरीरादिभावानां च पांचभौतिकत्वप्रवादः प्रख्यातस्तत्राह—

**अणुसंयोगस्त्वप्रतिषिद्धः ॥४॥**

परमाणुस्तु प्रकृतिरेवेति पृथिवी । तत्प्रकृतिकत्वादणोरपि पृथिवीशब्देन व्यपदेशः । तस्मात् सूक्ष्मस्वरूपसमुदायोऽत्र द्रव्यमुक्तमेकात्मकत्वात्प्राधान्यात् । स्थूलं तावदणुसंयोगजन्यम् । संयोगमात्रे न सम्भवत्येकतरस्य प्राधान्यमित्येकान्ततः पृथिव्यादिव्यपदेशो नोपपद्यते । तत्र संयोगे पृथिव्याद्यणुभूयस्त्वात्पार्थिवादिव्यवहारो भाक्तः । इह स्वरूपारम्भेऽनेकात्मकत्वं प्रतिषिद्धं समवायिनो न स्थूलारम्भेऽणुसंयोगः प्रतिषिद्धः ।

पृथिव्याद्यणूनां शरीरेन्द्रियविषयभेदात्स्वरूपत एव त्रैविध्यमुक्तम् । तत्र पृथिव्यणुसंयोगात्स्थूलारम्भोऽप्युक्तः । इदानीं शरीराणुसंयोगात्स्थूलशरीरारम्भो वक्तव्यः । तत्र पार्थिवं प्रकृत्याह—

**तत्र शरीरं द्विविधं योनिजमयोनिजञ्च ॥५॥**

तत्रेति प्रसक्तेऽणुसंयोगे । अणुसंयोगाद् द्विविधः शरीरा-

रम्भः । योनिजोऽयोनिजश्चेति । तत्र गवाश्वमनुष्यादीनां योनिव्यवस्थाविशेषान्नियतदिग्देशगात्रं योनिजं स्थूलशरीरं स्वरूपाश्रयम् ।

## अनियतदिग्देशपूर्वकत्वात् ॥५॥

योन्यनुरोधाभावादणूनां जलवाय्वादिवदनियतदिग्देशपूर्वकात् संयोगादयोनिजस्वरूपशरीराम्भः । तद्दिव्यं शरीरमाहुः ।

## धर्मविशेषाच्च ॥७॥

समवाय्यसमवायिनोर्जातिसंख्यावच्छेदादणुविशेषाणां संयोगाददृष्टात्संकल्पनिमित्तसंस्थानरूपधर्मविशेषाच्च स्वरूपशरीरारम्भः । लोकव्यवस्थातश्च तस्य सांसिद्धिकी प्रतिष्ठा ।

## समाख्याभावाच्च ॥८॥

अनेकभावसमूहः शरीरम् । तदनेकार्थसमूहे शरीरमिति समाख्या । सा पुनर्यौगिक्येव भवति न रूढिः । पुरुषस्याश्रयः श्रयणाच्छरीरं समाख्यातम् । न तु तस्य नियतदिग्देशपूर्वकत्वं समाख्यातो लभ्यते । तस्मादप्यस्त्यानियतदिग्देशपूर्वकं स्वरूपशरीरम् । तदनुविधानाद् योन्यादिनिमित्तान्नियतदिग्देशगात्रस्य स्थूलशरीरस्यारम्भः ।

## संज्ञाया आदित्वात् ॥९॥

संज्ञार्थयोर्मध्ये संज्ञाया एवादित्वं नार्थस्य । वाचमनु ह्यर्था सृष्ट्यादौ प्रवृत्ताः । तस्मात् संज्ञाया आदित्वात् तदनुरूपोऽर्थो द्रष्टव्य इति शरीरस्य नियतदिग्देशसंस्थानं निमित्ताद् भवति न स्वरूपतः ।

## सन्त्ययोनिजाः ॥१०॥

एभिरुक्तहेतुभिरयोनिजा अपि सन्ति शरीरिण इति प्रतिपद्यते । एतेन चतुर्दशविधो भूतसर्गो व्याख्यातः ।

## वेदलिङ्गाच्च ॥११॥

अयोनिजस्वरूपशरीरसत्त्वे वेदवचनमपि लिङ्गमस्ति । लैंगिकं हि शाब्दज्ञानं भवतीतिवेदस्य लिगत्वमुक्तम । तथा च श्रुतिः— **प्रजापतिः प्रजा असृजत । स ऊर्ध्वेभ्य एव प्राणेभ्यो देवान सृजत । येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजाः । अथोर्ध्वमेव मृत्युं प्रजाभ्योऽत्तारमसृत** ( श. प. १०,१,३,१ ) इति । एवमन्यत्रापि मर्त्यामर्त्यभेदेन योनिजमयोनिजञ्चेतिद्विविधं शरीरं श्रुत्या बहुशोऽभिहितं द्रष्टव्यम् । तत्र योनिजानामयोनिजशरीरप्रतिपत्तिरप्याम्नायते—

**अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥**
(य. सं. ३१,१७) इति ।

तत्रामर्त्यानामपि ऋषयः, साध्याः, आजानदेवा इत्यादिनानासंज्ञाः स्वरूपशरीरभेदादाम्नाता द्रष्टव्याः ।

तन्त्रान्तरे प्रसिद्धं शास्त्रे व्याख्यातं लिङ्गशरीरं तु स्वरूपशरीराद् भिन्नम् । तदस्याविषयत्वादत्राविवक्षितमिति द्रष्टव्यम् ।

इति चतुर्थे द्वितीयाह्निकम् ।

---

# अथ पञ्चमाध्याये प्रथमाह्निकम्

पञ्चमाध्याये कर्मनिरूपणम् । तत्रापि प्रथमाह्निके कर्मापवर्गनिरूपणं[1], द्वितीये चादृष्टादिसंस्कारनिरूपणम् ।

## आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥१॥

एकद्रव्याश्रयं कर्मोक्तम् । तत्र कर्मणः स्वाश्रयं त्यक्त्वा संयोगेन द्रव्यान्तरे संक्रमणमपवर्गः । संयोगे सत्येवापवर्गो भवति। न चात्यन्तिकः सन्निकर्षः परमाणुसंयोगे सम्भवति । सान्तराला ह्येत आकाशेन व्यवहिता अवतिष्ठन्ते । आकाशस्य तु निष्क्रियत्वान्नातिलंघनं सम्भवति कर्मणाऽविभवात् । तत्र कथं कर्मापवर्ग इत्युच्यते ।

परमाणुं परितो रश्मिमण्डलविशेषः संयोगो नाम गुणोऽभ्युपगम्यते । ते च रश्मय आकाशे विभवन्ति । द्रव्यसंयोगे उभयसंयोगरश्मिसंन्निकर्षेण[2] सेतुभूतेन कर्मापवर्गो भवति । सर्वोऽपि द्रव्यसंयोगः कर्मजः संयोगजश्चोक्तः । संयुक्तस्य पुनरन्येन संयोगः संयुक्तसंयोगः । एवं संयोगपरम्परया द्रव्येष्वपवर्गः प्रवर्तते ।

पूर्वाश्रयं त्यक्त्वा यावत् संयोगरश्म्युपारूढं भवति कर्म, तावत्संस्कारत्वं[3] प्राप्तं कर्मत्वं जहाति । उत्तराश्रयं प्रतिपन्नं संस्कारत्वं हित्वा पुनः कर्मत्वेन[4] परिणमते । इत्थं च कर्मणः संस्कारः संस्काराच्च पुनः कर्म । एवमुत्तरोत्तरं पर्यायेण कर्मसंस्कारपरिणाम

---

१. Transmission of Force from one body to another.
२. Interplanetary Energy. ३. Energy. ४. Force.

परम्परया कर्मापवर्गप्रवृत्तिरुक्ता। एतेन कर्मसंस्कारावन्योऽन्यजन्मानौ वेदितव्यौ। कर्मणः संस्काररूपेण परिणतिरेवकर्माभावः संस्कारोत्पत्तिश्चोक्ता। संस्कारस्य पुनः कर्मत्वप्रातिपत्तिरेव कर्मोत्पत्तिः संस्कारनाशश्चोक्तः। न हि सतोऽर्थस्यात्यन्ताभावोऽसतश्चापूर्वस्योत्पत्तिरुपपद्यते।

पृथिव्यप्तेजोवायवः आत्मा मनश्चेति षड् द्रव्याणि कर्मवन्ति ततश्च संयोगवन्त्युक्तानि। तत्रादौ आत्मकर्मापवर्गश्चिन्त्यते।

द्विधाशरीरे आत्मकर्मप्रवृत्तिर्दृष्टा। इच्छापूर्वकं प्रवृत्तं कर्मप्रयत्नः। सचेच्छातन्त्रत्वात् क्षणिकः। प्राणसंयोगेन प्रवृत्तं कर्म जीवनम्। तच्च नित्यं चोदनाधीनत्वात्। तत्रादौ प्रयत्नापवर्गः परीक्ष्यते। मुसलेन धान्याद्यवहनने आत्मसंयोगप्रयत्नाभ्यामपवृक्तं कर्म हस्तं प्राप्नोति।

**तथा हस्तसंयोगाच्च मुसले कर्म ॥२॥**

तथेत्यपवर्गात् हस्तसंयोगद्वारा कर्म मुसलेऽपवृंक्ते। चकाराद् गुरुत्वग्रहणं। गुरुत्वादपि मुसले पतनरूपं कर्म समुच्चीयते।

**अभिघात[1]जे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥३॥**

वेगपूर्वकः संयोगोऽभिघातः। उलुखलस्थधान्ये मुसलेना-

---

1. Collision.

भिहते मुसलगतं कर्म विभागं प्राप्नोति। एकोंऽशो मुसलाद् धान्ये धान्यादुलूखले ततश्च संयोगात्पृथिव्यां संस्कारत्वं प्राप्तं आवापं गच्छति। अपरोंऽशो धान्येन प्रत्याभिहतो मुसलं प्राप्नोति। तस्मिन्नभिघातजे कर्मणि नास्ति हस्तसंयोगः कारणं प्रयत्नाभावादप्रवृतेः।

तथाऽत्मसंयोगो हस्तकर्मणि ॥४॥

मुसलसंयोगादभिघातजं कर्म हस्तं प्राप्नोति, तेन यत्कर्महस्ते जायते तदभिघातजमेव, न हि तस्मिन्नात्मसंयोगः कारणमिच्छाप्रयत्नाभावत्।

अभिघातान्मुसलसंयोगाद्धस्ते कर्म ॥५॥

हस्तसंयोगपरम्परयाऽत्मकर्म भौतिकत्वं प्राप्तम्। तदेव भौतिकं कर्माभिघातात्प्रत्यपवृक्तं मुसलं प्राप्तम्। मुसलसंयोगाद्धस्ते प्राप्तं भवति।

आत्मकर्म हस्तसंयोगाच्च ॥६॥

हस्तसंयोगात् प्रत्यपवृक्तं कर्मात्मनि जायते। चकारादात्मनि द्विविधमत्र कर्म सूचितमभिघातजं प्रत्यपवृक्तं, प्रयत्नजं चोत्क्षेपणमिति। मुसले हस्ते चैकविधमेव जायते कर्माभिघातजं, तत्र प्रयत्नाभावादिति।

संयोगाभावे गुरुत्वात्पतनम् ॥७॥

आत्मनो यत्र मुसलविधारण इच्छापूर्वकः प्रयत्नो न भवति, तदाऽत्मसंयोगाभावे मुसलस्य गुरुत्वात्पतनं जायते।

नोदनाविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ॥८॥

ऋजुगत्या गच्छतः पिण्डस्य यो दिग्विक्षेपः, ऋजुमार्गात्सव्यापसव्योर्द्धाधोगमनरूपस्तदुदसनम्[1]। तच्चोदसनं कर्मान्तराधानाद् भवति। तदाधानं यदि शनकैः प्रयुक्तं तदा नोदनं[2] यदि वेगात्तदाऽभिघात उच्यते। तथाप्युभयथा नोदनमेव भवति।

तच्च नोदनं द्विधा विशिष्यते, चेष्टाविशेषाद्दिग्विशेषाच्च। प्रकृते तु मुसले गुरुत्वनिमित्तमेकमेव कर्म पतनं तच्च ऋजु। आत्मसंयोगाभावात्प्रयत्नाभावे गुरुत्वादन्यन्नोदनं नास्तीतिमुसलस्य नास्त्युदसनम्।

प्रयत्नविशेषान्नोदनविशेषः ॥९॥

जायत इति शेषः।

नोदनविशेषादुदसनविशेषः ॥१०॥

जायत इति शेषः। उदसनं विक्षेपः। एतेन सर्वकर्मयोग्यतावच्छिन्नं सर्वयन्त्रतन्त्रात्मैकमात्माधिष्ठितमिदं[3] शरीरमुक्तं भवति। आत्मकर्मसम्बन्धेन भौतिककर्मापवर्गमुक्त्वा भौतिकेषु कर्मापवर्गमपदिशन्नाह—

हस्तकर्मणा दारककर्म[4] व्याख्यातम् ॥११॥

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म। हस्तसंयोगात्परशुदण्डे

---

१. Deflection : Change of direction. २. Pressure. ३. Human body is an omni.genous machine. ४. Suppli-tting force.

कर्म। तत्संयोगात् परशौ कर्म। परशुसंयोगात्काष्ठे कर्म। परशोर्वेगमहत्वाद् धारायाश्च तीक्ष्णत्वाद् धाराकाष्ठसंयोगप्रदेशे काष्ठसंयोगानामल्पतरत्वान्नाशः। तस्माद्विभागात्काष्ठदारणम्। अप्तेजसोः कर्मापवर्गमुदाहरति—

तथा दग्धस्य[१] विस्फोटने[२] ॥१२॥

कर्मोत्पत्तिस्तदपवर्गश्चेति शेषः।

सोमबहुलं विस्फोटकद्रव्यं भवति। सोमाणूनां तेजोऽणुसंयोगो दहनं सः पाकः। तत्र धूमाणूनां सहसा विमोकाद् गमनावक्षेपणाभ्यां वेगाच्चतुर्दिक्षु प्रसरणं विस्फोटनम्। तेन महत्कर्मोत्पत्तिः। वायुकर्मस्वादौ प्राणकर्माह—

यत्नाभावे प्रसुप्तस्य चलनम्[३] ॥१३॥

श्वासप्रश्वासजीवनादिकर्मवायुकर्मोक्तम्। आत्मसंयोगविशेषात्प्राणे कर्म। प्राणसंयोगाच्छरीरे प्रसुप्तस्य चलनं करचरणादीनां च चलनं जायते, न तत्प्रयत्नद्वारकामिति। भौतिकवायुकर्माह—

तृणे कर्म वायुसंयोगात्[४] ॥१४॥

नाडयवायुसंयोगाद्वायुर्कर्म तृणवृक्षादिष्वपवृंक्ते, ततस्तेषां चलनकम्पनादिकर्म जायते। सूक्ष्मवायुकर्माह—

१. Forecs in combustiom. २. Forees in explosion. ३. Involuntary action in the body. ४. Due to Atomospheric field.

## मणिगमनं सूच्यभिसर्पणमदृष्टकारितम् ॥१५॥

मणति उपसर्गादव्यक्तरूपेण पदार्थधर्मानाविष्करोतीति मणिः। सूर्यकिरणानव्यक्तरूपेण संक्षिप्यैकत्रीकरोतीति सूर्यकान्तमणिः। अयोगतवायुरश्मीनाविष्करोतीत्ययस्कान्तमणिश्चुम्बक इति लोके प्रसिद्धः।

चुम्बत्याभिमुख्येनाकर्षतीति चुम्बकः। चुरादिपक्षे तु चुम्बयति छिनत्ति पराकरोतीति चुम्बकः। चुम्बकयोर्मुखपुच्छयोरितरेतराकर्षणं, मुखयोः पुच्छयोर्वा परस्परपरापकर्षणमित्येतद्धर्मद्वयं चुम्बके युगपद् दृष्टमितिचुम्बकस्य चुम्बकत्वम्।

पृथिवीगोलस्याप्येवंविधं चुम्बकत्वं दृष्टं चुम्बकेन संघृष्टेऽयः खण्डेऽप्येवंविधं चुम्बकत्वं जातं दृश्यते। अयोव्यतिरिक्तलोहेषु तृणकाष्ठादिष्वपि तारतम्येन दृष्टं चुम्बकत्वम्।

वाय्वणुषु नित्यविद्यमानमपीदं चुम्बनाख्यं वायुकर्माणूनां संस्थानविशेषात्प्रतिरुद्धं संस्कारत्वं गतं नोपलभ्यते। संघर्षणाभिघातादिनाऽणुसंयोगनाशे मेरुप्रेरिता अणवः पुनस्तथा संघटन्ते यथैषां चुम्बकत्वं पुनः प्रादुर्भवति। तदेतच्चुम्बनं मेरुकारितमित्यदृष्टकारितं न पृथिवी कर्मकारितमिति। महत्तरेऽयः खंडे मणौ गमनप्रवृत्तिः। गुरुतरे मणौ तु सूच्यादावपसर्पणं तस्य-

---

१. Action in a magnet. २. Actions in the needle. ३. Polority in Magnetism. ४. Physical theory of Magnetism.

लघुतरत्वात् ।

उक्तो द्रव्याद् द्रव्यान्तरे कर्मापवर्गः । इदानीमिष्वाद्येकद्रव्यस्यैकदेशनोदनात्कृत्स्नेऽपीष्वादौ कर्मप्रवृत्तिर्दृश्यते । कथं तत्रावयवादवयवान्तरे कर्मापवर्ग इति कलाशोऽनुक्रमेण कर्मणामपवर्गमाह —

**इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ॥१६॥**

इषुप्रत्यञ्चासंयोगस्थले प्रत्यञ्चासंयोगात्साक्षात्संयुक्तेषु कतिपयेष्वणुष्वपवृक्तं प्रत्यञ्चाकर्म संस्काररूपेणावतिष्ठते । ततश्च यावत्संयोगरश्मिभिर्वोढुं शक्यं तावन्मात्रं कर्म सकृत् संयोगादुत्तरेऽणावपवृज्यते । एवमवशिष्टात्कर्मणो द्वितीयमात्रा पुनरपवृज्यते । एवं प्रथमाणौ संस्काररूपेण सञ्चितं प्रत्यञ्चाकर्म क्रमेण कलाश उत्तरेऽणावपवृक्तो भवत्यासमाप्तेः । प्रति संयोगं कर्मण एका कलाऽपवृज्यते । अनेक संयोगेभ्यः कृत्स्नमेवकर्म कलाशोऽपवृज्यत इति ।

**नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च ॥१७॥**

कर्मणो विभज्य क्षणक्रमेण कलाशोऽपवर्ग उक्तः । इदानीमेकस्याः कलाया आद्याणुमारभ्येषोरन्त्याणुपर्यन्तं क्रमेणापवर्गमाह । प्रत्यञ्चया नोदनादणौ कर्म सञ्चितं भवति । तत्र प्रथमा-

---

१. Translatory motion in a body.  २. Quamtum.
३. Force in a body is translated by quanta.

कलाऽणुसंयोगारूढा संस्कारत्वं प्राप्तोत्तरेऽणौ प्रतिपादिता पुनः कर्मत्वेन प्रवर्तते। एवमुत्तरोत्तरमणुक्रमेण पर्यायेण कर्मसंस्कार[1]-परिवर्तनपरम्परया कर्मापवर्गः प्रवर्तत आऽन्त्याणोः।

## संस्काराभावे गुरुत्वात्पतनम् ॥१८॥

इषौ गमनकर्मसमकालमेव गुरुत्वादवक्षेपणमपि प्रवर्तते। तेन हीयमानसंस्कार इषु काले काञ्चित्काष्ठामासाद्य कर्मनाशात् भूमौ पततीति ॥

इति पञ्चमे प्रथमाह्निकम्।

# अथ पञ्चमाध्याये द्वितीयाह्निकम्

पूर्वाह्निके भूगोलमण्डलान्तःस्थितद्रव्येषु कर्मापवर्ग उक्तः। द्वितीयाह्निके ब्रह्माण्डमध्यवर्तिग्रहनक्षत्रादिगोलेषु अन्योऽन्यस्य कर्मापवर्ग उच्यते।

## नोदनाभिघातात्संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥१॥

पृथिव्यामित्यस्मिन्भूगोले, न तु पृथिवीद्रव्यसामान्ये, तस्मिन् कर्मापवर्गस्य पूर्वाह्निक उक्तत्वात्। नोदनाभिघाताभ्यां कर्मोत्पत्तिरुक्ता। तत्र कर्मजनकौ नोदनाभिघातौ यदैतद् भूगोलान्तर्वर्तिना एव स्यातां तदा तौ दृष्टौ। तत्कारितं च कर्मदृष्टकारितं भवति।

## तद्विशेषेणादृष्टकारितम् ॥२॥

१. Energy and Force are inter-changeable.

तद्व्यतिरिक्तौ गोलान्तरवर्तिनौ[1] नोदनाभिघातौ अदृष्टमुच्यते। यद्यपि सर्वमेव नोदकं कर्मागन्तुकं भवति तथापि लोकान्तरादागतः संस्कार एव विशेषेणेहादृष्टमुच्यते। तेन संस्कारेण कारितञ्च कर्मेह पृथिव्यामदृष्टकारितमुच्यते। संस्कारात्कर्मप्रवृत्तिरुक्ता। स च कर्महेतुः संस्कारोऽस्मिन्भूमण्डले यदि न विद्यते गोलान्तरनिष्ठस्ततोऽपवृक्तश्चात्र भूमण्डले कर्म जनयति तदाऽदृष्टमुच्यत इति सूत्राभिप्रायः। तच्चगोलान्तरादपवृक्तं कर्म तत्संयोग रश्म्यारूढं संस्कारत्वं प्राप्तं गुणपक्षे न्यस्तम्। तस्माद्गुणोऽदृष्टं संस्कारत्वात्।

यत्तु कैश्चिददृष्टं नाम परमाणूनां मनसश्च गुणविशेषः क्रियाहेतुः कल्प्यते भ्रान्तं तदुत्प्रेक्षामात्रं कुदर्शनञ्च मन्दमतीनाम्। नहि नित्येषु परमाणुष्वनित्यः कश्चिद् गुण उपपद्यते। नित्ये चादृष्टे अभ्युपगते नित्यप्रवृत्तौ अपीत्यभावप्रसंगः स्यात् क्रियाहेत्वनुच्छेदात्।

अथानादिप्रवृत्तस्य पुरुषस्य यत्सञ्चितं कर्म संस्काररूपेणात्मन्यवस्थितं तददृष्टमित्यात्मगुणः स्यादिति। तदप्यनिष्टं, न ह्युक्तादृष्टकारणकं मणिगमनं सूच्याभिसर्पणं वाऽत्मादृष्ट कारितमुपपद्यते, (५,१;१५) आत्मनस्तत्र सम्बन्धाभावात्।

भवत्येव तु गोलाद्गोलान्तरे कर्मापवर्गः। सूर्यचन्द्रादिग्रहनक्षत्रगोलेषु क्रियाविशेषात्पृथिव्यां तन्निबन्धना विकारविशेषा

१. Astral energy and interplanetary reactions.

जाता दृश्यन्ते। ग्रहस्थितिवशात्पक्षमासर्त्वयनवर्षयुगादिक्रमेणात्र पृथिव्यामाध्यात्मिकादैविकाधिभौतिकभावानां परिवर्तनानि तथा प्राणिनां सुखदुःखादयो भावा सर्वं खल्वेतददृष्टस्य चेष्टितं दृश्यते।

यद्यपि पृथिव्यादिगोलानां समष्टिसंयोगरश्मयो दीपादिप्रकाशकिरणवद्यथायथाधिष्ठानाद् दूरमपसरन्ति तथा तथा विरलीभूतास्तनुत्वं प्रपद्यन्ते, तथाप्येषां सर्वथाऽभावो नोपपद्यते। एवं चेद माकाशमण्डलं सूर्यादिगोलसंयोगैरोतं च प्रोतं च विद्यते। तेनादृष्टापवर्गात्सर्वेऽपि जगद्भावाः संपरिसृष्टाः प्रवर्तन्ते। एवमदृष्टं स्वरूपतो निरूप्येदानीं तद्विवेकार्थमिह कानिचिद् दृष्टादृष्टकारितानि कर्माण्युदाहरति—

**अपां संयोगाभावे गुरुत्वात्पतनम् ॥३॥**

मेघस्थापां वर्षणं पतनम्। तद् गुरुत्वकारितं नादृष्टकारितमिति।

**द्रवत्वात्स्यन्दनम् ॥४॥**

द्रवत्वं[१] शिथिलः संयोगो यत्रावयवा नात्यन्तं संहता न चात्यन्तं विभक्ता गुरुत्वान्निम्नप्रवणा वहन्ति तत्स्यंदनं[२] दृष्टकारणकं पृथिवीगुरुत्वकारितत्वात्।

**नाड्यवायुसंयोगादारोहणम् ॥५॥**

वाष्पीभूतानामवायवानां यदूर्ध्वमाकाशे गमनं तन्नाड्यवायुसंयोगाद् भवति, नादृष्टकारितम्।

**नोदनापीडनात्संयुक्तसंयोगाच्च ॥६॥**

---

१. Fluidity. २. Flow.

वेगवतां वाष्पाणां धूमानां वा नलिकादिष्वापीडनात्[1]संयुक्त-संयोगयुक्त्यो[2] बलवन्नोदनेन[3] यद्यन्त्रादि[4]चालनं तद्दृष्टकारितम्।

अथादृष्टकारितमुदाहरति—

**वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥७॥**

इति शब्दो व्यवस्थायाम्। वृक्षादिषु मूलद्वारेण यद्रसादि-गमनं तदभिसर्पणम्। तच्च व्यवस्थातो नानारूपं दृष्टं मधुरादि-रसभेदग्रहणात्। तत्तु न सम्भवति समानभूमा उपजातानाम्। तत्र वृक्षस्य रसविशेषग्रहणे बीजधर्मो हेतुर्भवति नियमदर्शनात्। किन्तु रसं गृह्णाति जायते वर्द्धते विनश्यतीत्यादयो भावा वृक्षे दृष्टा नोपपद्यन्त ऋते पुरुषसम्बन्धात्। अनात्मवत्सु तददर्श-नात्। तस्माच्छरीरं वृक्षम्। न चादृष्टं विना शरीरोपपत्तिरित्येते वृक्षेऽपसर्पणादयो भावा जीवादृष्टकारिता न धर्ममात्रनिमित्ता न वा पृथिवीकारिता इति। पुनर्दृष्टकारणकं कर्म दर्शयति—

**अपां संघातो विलयनञ्च तेजःसंयोगात् ॥८॥**

मेघस्थजलकणानां विद्युत्संपातेनाभिहतानां सम्पीडितानां च संघाताद् विन्दुरूपेण ततश्च धारारूपेणाऽथवा संघातविशेषा-द्धिमकरकादिरूपेण संघातस्तेजःसंयोगकृतो नादृष्टकारितः।

एवं जलहिमकरकाद्यवयवान्तरालेषु तेजःप्रवेशात्तत्संयोगनाशा-

---

१. Compression. २. All the engineering devices.
३. Push and Pull. ४. All mechanical motions.

द्विलयनं दृष्टकारणकं नादृष्टकारितमिति । तत्र तेजःसंयोगे प्रमाणमाह—

**तत्र विस्फुर्जथुर्लिङ्गम् ॥९॥**

तत्रापां संघाते विलयने च तेजःसंयोगे विद्युत्संपातो लिङ्गं दृष्टम् । तथा—

**वैदिकञ्च ॥१०॥**

तत्र श्रुतिरप्याह—इन्द्रो वृत्राय वज्रं प्रजहार (श. प.४,३, ३,५) इति । वज्रो विद्युत् । वृत्रो नाम विभक्तानां वाष्पाणूनां परितो वृत्ताकारश्चर्मवदवनहनविशेषः संयोगप्रतिबन्धकः[1] । स च वृत्रो विद्युदभिहननादापीडनाच्च विनश्यति । तेन संयोगादपां संघातो जायते ।

**अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥११॥**

अथवा वेगवतां मेघानामेव परस्परसंहननाद् वृत्रनाशात् संघातोपपत्तिः । मेघानां परस्पराभिहनने वज्रनिर्घोषो लिङ्गम् । न हि संयोगविभागौ विना शब्दोत्पत्तिर्भवतीति । अथवा पर्वतशिखरेणाभिहता अपि वेगवन्तो मेघा संहता वर्षन्तीति ।

एवमेवतद् भूगोलान्तर्वर्तिनोदनाभिघातजकर्मभ्योऽत्र पृथिव्यां गोलान्तरवर्त्यदृष्टनिमित्तं च कर्मविवेकेनोदाहृत्यान्यगोलेष्वदृष्टहेतुकं कर्मातिदिशति—

**पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥१२॥**

---

1. Surface tension.

अपां व्युदासेन तत्तद्भूमिकर्म विवक्षितं, न सामान्यं भूतकर्मेति द्रष्टव्यम्। सर्वे गोला पृथिव्यात्मका सन्तोऽपि तत्तद्द्रव्याणुभूयस्त्वाद् विशिष्यन्ते। पृथिवीभूयिष्ठोऽब्बहुलश्चायंभूगोलस्तं प्रति पृथिव्यपां गुरुत्वम्। गुरुत्वस्य विशेषतः सजातीयसंयोगत्वात्। मेरुर्वायूनां भूमिर्वायुभूयिष्ठत्वात्। सूर्यस्तेजसां भूमिस्तेजोभूयिष्ठत्वात्तं प्रति तेजसां गुरुत्वं सोमभूयस्त्वं चन्द्रमसः समुद्रतरंगविशेषादनुमीयते। गोलेषु द्रव्यभूयस्त्वमुक्तं— **अग्नीषोमौ भानुचन्द्रौ ततस्त्वंगारकादयः। तेजोभूखाम्बुवातेभ्यः क्रमशः पञ्च जज्ञिरे (सू.सि.१२,२४)** इति।

सर्वेऽपि गोलाः पृथिव्याद्यणुसंयोगात्मकाः स्थूलाः। तस्मात्सर्वगोलान् प्रति पार्थिवद्रव्याणां तारतम्येन गुरुत्वमध्यवसेयम्। तथाप्यणुभूयस्त्वाद् गुरुत्वमण्डलव्याप्तितारतम्यं द्रष्टव्यम्। चन्द्रमण्डलसमीपस्थानां पृथिव्यपां चन्द्रमसि गुरुत्वात् पतनं भवतीत्याद्यूह्यम्। स्वस्वगोलाद् दूरमपसरतां संयोगरश्मीनामुत्तरोत्तरवैरल्याद् गुरुत्वमण्डलस्य तनुत्वप्रतिपत्तिस्तूक्तपूर्वा। तत्रापि विशेषज्ञानार्थं देशान्तरवर्गव्युत्क्रमानुपातेन गुरुत्वचेष्टातारतम्यं गणितसाधितं मायाशास्त्रे द्रष्टव्यम्।

**अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥१३॥**

भूमितो विभक्तानां तेजोऽणूनां सूर्यं प्रति गुरुत्वात्पतनमूर्ध्वज्वलनम्। वाय्वणूनां भूगोलाद् विभक्तानां मेरुं प्रति गुरुत्वात्

तिर्यक्पवनं मेरोस्तिर्यक्संस्थितेः ।

अणूनामाद्यं कर्मेति । नैमित्तिकप्रलये परमाणवः परस्परसंयोगविशेषात्कर्मसाम्याद् स्थितिसंस्कारं प्रतिपद्य निश्चलास्तिष्ठन्ति । न पुनः स्वतः सृष्ट्यारम्भे प्रवर्तितुं शक्नुवन्ति । तस्मात्पुनः प्रवृत्त्यर्थं कर्मान्तरमपेक्षन्ते । न च तत्कर्म स्वस्मिन् सम्भवति परमाणौ । तत्र रुद्रात्मन्यहंकारेऽदृष्टं तिष्ठति । काले प्राप्ते तेनादृष्टेन परमाणुष्वाद्यं कर्म जायते । तत्साम्यभङ्गे पुनः सर्गः प्रवर्तते । मनस आद्यकर्मनिमित्तमदृष्टं तु समष्टिमनसि प्रजापतौ तिष्ठति । अत्राहङ्करादितत्त्वानामभौतिकत्वाद् दिव्यत्वान्नित्यात्मसम्बन्धाच्च रुद्रप्रजापत्याद्यभिमानिव्यपदेशैरभिधानं प्रतिपत्तव्यम् ।

प्राकृतिकलये तु सर्वथा कर्माभावः । प्रधानेऽपि साम्यं प्राप्ते ईश्वरेक्षणेन प्रधाने आद्यं कर्म जायते ततश्च सर्गप्रवृत्तिः । तत्रेक्षणं प्राण्यदृष्टकारितमेव सम्भवति नान्यत्किञ्चित्प्रवृत्तिनिमितमुपपद्यते । मनःकर्माह —

**हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥१४॥**

द्विविधं मनः कर्मोक्तं ज्ञानेन्द्रियद्वारकं ज्ञानक्रिया । कर्मेन्द्रियद्वारकं प्रयत्नजम् । आत्मसंयोगपूर्वकमनःसंयोगात्कर्मेन्द्रियेषु कर्मापवर्गः । हस्तादिसंयोगान्मुसलादिष्वित्याद्युक्तं पुरस्तात् । तथैव मनःसंयोगाज्ज्ञानेन्द्रियेषु ज्ञानप्रवृत्तिरुक्ता ।

अथात्मकर्म, तत्रादौ ज्ञानात्मकं कर्माह—

**आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥१५॥**

आत्मनो गुणकर्मणामव्यतिरेकेणात्र ग्रहणं त्वात्मकर्मणां संस्कारात्मकत्वादनात्मकर्मवैधर्म्याच्च गुणत्वेनैव ग्रहणार्थं तथा चाकुञ्चानात्मकं दुःखं, प्रसारणात्मकं सुखं, अवक्षेपणात्मिकेच्छा। आत्मन्युत्क्षेपणं द्वेषः। तेषां बाह्यनिमित्तैरान्तरिकैर्वोत्पत्तिः। तत्र बाह्यनिमित्तमर्थः, तत्सान्निकर्षादिन्द्रिये संस्कारः। इन्द्रियसन्निकर्षान्मनसि संस्कारापवर्गः। मनःसन्निकर्षादात्मनि क्रिया। तत्संवेदनं यथायोगं सुखंदुःखमिच्छा द्वेष इति।

**तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः ॥१६॥**

आत्मेन्द्रियमध्यवर्ति मन उभयत्र सान्निकृष्टम्। तस्मिन्स्वात्मनि स्थिते सन्निकर्षाभावाद् वृत्त्यभावः। तद्वृत्तिनिरोधो योग-उच्यते। ततश्च शरीरे दुःखाभावः। व्युत्थिते तु मनस्यात्मेन्द्रियार्थसन्निकर्षात्पुनर्दुःखादीनां प्रवृत्तिरदृष्टाद्धर्माच्च। अयं मनसः स्व प्रकृतिलयरूपयोगोऽसंप्रज्ञातः समाधिरुच्यते। शरीरे चोदनात्मककर्मोत्पत्तिमाह—

**अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥१७॥**

मलानां शरीराद् बहिर्निरसनमपसर्पणम्। शरीरे रससंप्राप्त्या रुधिरादिधातूनामुत्पत्तिस्ततश्च शरीरेन्द्रियभावानां पोषणमुपसर्पणमित्यादिशरीरभावारम्भोऽदृष्टकारितः। शरीराद् बहिः स्थितानामन्नपानादिभोगानां स्त्रीपुत्रधनधान्यादिकार्यान्तराणां च प्रति-

संवेदनमदृष्टकारितम् ।

**तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः ॥१८॥**

तदभाव इत्यदृष्टाभावे । शरीरारम्भेऽदृष्टसंयोगो हेतुरुक्तः । अदृष्टाभावे तत् संयोगाभावः । संयोगाभावे नोपपद्यते शरीरारम्भः । ततो जन्ममरणनिवृत्तिर्मोक्षः ।

अयमत्राभिप्रायः । मनसः स्वप्रकृतौ लये सर्ववृत्त्यभावे स्थितिसंस्कारञ्च प्राप्ते मनसि नितान्ताज्ञानावस्थाऽसंप्रज्ञातः समाधिः । नहि तत्र किञ्चिदपि संप्रज्ञायत इति ।

आत्ममनसोः संयोगविशेषादात्मदर्शनं स आत्मप्रत्यक्षः । तस्यामवस्थायामात्मप्रत्यक्षे सत्यप्यदृष्टसद्भावान्न शरीराभावोऽदृष्टनिबन्धनत्वाच्छरीरस्य । साऽवस्था जीवन्मुक्तिः । अदृष्टस्यापि भोगात् क्षये शरीरपाते कैवल्यं स मोक्षः । आत्मदर्शनात्प्रवृत्त्यभावेऽदृष्टानारम्भाच्छरीरानारम्भः परमोऽपवर्गः ।

पृथिव्यप्तेजोवायव आत्मा मनश्चेति षड्द्रव्येषु कर्म तदपवर्गश्च निरूपितः । इदानीं देशकालाकाशादीनां गुणकर्मणां चाकर्मवदर्थानां कर्मसम्बन्धः परीक्ष्यते । तत्र प्रसंगात् प्राप्तं कर्माभासमाह—

**द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥१९॥**

तमसि च्छायायां यच्चलनप्रत्ययस्तत्कर्माभासो न कर्म । छायाया अद्रव्यत्वात् । प्रकाशाभावो हि च्छाया न द्रव्यम् । कस्मात् ? द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादिति । न चलनप्रत्ययमात्रं

कर्म भवति। चलनहेतुर्हि कर्मोच्यते। तच्चैकद्रव्यवृत्ति दृष्टम्। न च तमस एकद्रव्यत्वमुपपद्यते। तद्धि द्रव्यगुणकर्मवन्न निष्पद्यत इति। तत्र हेत्वन्तरमाह—

**तेजसो द्रव्यान्तरावरणाच्च ॥२०॥**

दीपादिप्रकाशाधिष्ठाने चलति प्रकाशावरकद्रव्यछायायां चलनप्रतीतिर्भ्रान्तिः। प्रकाशाभावज्ञानमात्रमिति।

**दिक्कालावाकाशञ्च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥२१॥**

द्विधा हि द्रव्यस्य क्रियावत्त्वं भवति। तस्य तदितिसम्बन्धमात्रात्तद्वत्त्वम्। तस्मिँस्तदित्याश्रयाश्रयिभावरूपसमवायसम्बन्धेन तद्वत्त्वमिति। तत्र देशकालयोर्नास्ति समवायेन क्रियासम्बन्धः। काले चलति, देशे चलतीति कर्मवद्द्रव्यसम्बन्धाद्देशकालयोः क्रियावत्त्वं तु न प्रतिषिध्यते। कर्मवतां पृथिव्यादीनाँस्तावत्समवायेन क्रियासम्बन्धस्तेन क्रियावत्त्वमुक्तम्। तादृशं क्रियावत्त्वं देशकालयोः प्रतिषिद्धम्।

आकाशस्य पृथग्ग्रहणात्तस्य निष्क्रियत्वं ततोऽपि विशिष्टम्। शब्दसंस्काराणां क्रियात्मकत्वात्तद्वत्त्वाच्चाकाशस्य विशेषेण क्रियावत्त्वं, तथापि कर्मवतामेकद्रव्याणां यादृक्क्रियावत्त्वं तादृशसमाकाशस्य नास्तीति प्रतिषिद्धं क्रियावत्त्वमाकाशस्येति।

**एतेन कर्माणि गुणाश्च व्याख्याताः ॥२२॥**

एवं कर्मणां निमित्तवशात्संस्कारत्वप्रपत्तिस्तेन क्रियात्मकत्वं तूपपद्यते, किन्तु क्रियावत्त्वं नास्ति। तेनाकर्मवत्त्वं कर्मणामिति।

एवं गुणपक्षेऽपि योज्यम्। रूपादीनां संस्कारात्मकत्वात् क्रियात्मकत्वं तु सम्भवति, किन्तु कर्मवतामिव क्रियावत्त्वं नास्ति।

**निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ॥२३॥**

परमाणुभिर्यद्द्रव्यारम्भः स संयुक्तसमवायः संयोगैः कर्मभिश्च भवति। संयुक्तसमवाये यद्यपि आकाशादयः सन्ति विद्यमानास्तथाप्येषां परमाणुवत्कर्मसंयोगपूर्वकः समवायो नास्ति। तस्मादेषां समवाये उदासीनकारणता भवति। साऽसमवायिकारणतोक्ता निष्क्रियाणाम्।

**कारणं त्वसमवायिनो गुणाः ॥२४॥**

देशकालावकाशं कर्माणि गुणाश्चेति समवायेऽसमवायिकारणानीत्युक्तम्। तद्गुणानां तु समवाये कारणत्वमुक्तम्। कर्मभ्यः समवायनिष्पत्तिरिति समवाये कर्मणां कारणत्वम्। द्रव्येषु संयोगस्याकाशे विभवात्, ततश्च कर्मप्रवृत्तेराकाशस्य कारणत्वं समवाये। परत्वापरत्वाभ्यां च देशकालयोः कारणत्वं समवाये। एवमसमवायिगुणानां समवाये कारणत्वं भवति। तथा च—

**गुणैर्दिग्व्याख्याता ॥२५॥**

समवाये दिग्देशापेक्षं परत्वापरत्वं परमाणूनां दिक्कारणकमिति गुणैर्दिक् कारणत्वेन व्याख्याता समवाये न तु साक्षात् कर्मणा।

**कारणेन कालः ॥२६॥**

कारयतीति कारणम्। कालेन कारितः समवायः क्षणक्रमेणेति कालः कारणमिति।

इति पञ्चमे द्वितीयाह्निकम्।

# अथ षष्ठाध्याये प्रथमाह्निकम्

अस्मिन्नध्याये आत्मक्रियापवर्गश्चिन्त्यते। क्रियेति कर्मसंस्कारयोः समानमभिधानम्। सा च क्रिया द्विविधा, ज्ञानक्रिया बलक्रिया चेति। तत्रोभयक्रियावानात्मा। बुद्धिसुखदुःखेच्छाद्वेषा ज्ञानात्मकाः संस्कारा अस्मिन् ज्ञानक्रिया। प्रयत्नोऽस्मिन् बलक्रिया। आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्मेति प्रयत्नस्यानात्मद्रव्येषु साक्षात्संयोगाज्जडकर्मत्वप्रतिपत्तिस्तूक्ता पूर्वाध्याये। सा जडक्रियैवेह बलमुच्यते। ज्ञानक्रियापवर्गोऽस्मिन्नाह्निके चिन्त्यते।

बुद्धिपूर्वककृतकारितानुमोदितस्य कर्मणो द्वय्येव गतिर्भवति। अपवर्गादधिदैवे ग्रहनक्षत्रादिषु संस्काररूपेणावस्थितं कर्मादृष्टमुच्यते। तदेव दिविष्ठत्वाद् दैवमुक्तम्। तदेव सर्वप्राणिसाधारणनिधिभूतेऽस्मिन् विराडात्मनि पुरुषेण स्वकीयो भागो निक्षिप्त इति भाग्यमुक्तम्। एवंकृतस्य कर्मणो यत्संस्काररूपेणात्मन्यवस्थानं स धर्मः।

यद्यप्युभयत्र स्थितस्यापि कर्मणः संस्कारात्मकत्त्वाद्धर्मत्वमदृष्टत्वञ्च समानमेव तथाप्यात्मन्यवस्थितानां संस्काराणां तज्जा-

---

१. The chapter deals generally with the fundamental Principles of Ethics and aquisition and development of moral values, as attributes of the Spirit, through rituals and conduct. २. Extrinsic energy. ३. Intrinsic energy.

तीयकमेवादृष्टं फलं भवति, तस्मात्तत्र दृष्टत्वादृष्टत्वव्यवस्था नाऽपेक्षिता। दैवरूपादृष्टसंस्काराणां जात्यायुर्भोगादिफलं तु लोके दृष्टं भवतीति व्यवस्थातोऽस्य कर्मणो विशेषेणादृष्टत्वमुक्तम्। पुनः **तद्विशेषेणादृष्टकारितम्** (५,२.२) इत्यधिष्ठानविशेषादप्यस्य विवेकार्थं विशेषेणादृष्टत्वमिष्यते। अपि चाहिंसाद्यात्मधर्माणामात्मन्यनुभूयमानत्वात्कथञ्चिद् दृष्टत्वं भवत्येव। तद्विशेषेण दिविष्ठसंस्काराणां तु सर्वथाऽदृष्टत्वमिति तेषु विशेषेणादृष्टसंज्ञा बोध्या। फलाभिसम्बन्धात्पूर्वं शरीरेऽविद्यमानत्वादपूर्वमप्युक्तम्।

अत्र धर्म इति संस्कारसामान्यादभ्युदयसाधकत्वबाधकत्वनिरपेक्षो धर्माधर्मयोः शब्दः। एषां धर्माणामात्मनि तत्तल्लक्षणैर्हिंसाऽहिंसादिभिरभिव्यक्तिः। तत्राभ्युदयनिःश्रेयससाधका अहिंसादिलक्षणाः संस्कारा धर्माः। ये तु बाधका हिंसादिलक्षणास्ते अधर्माः[1]। ते चाभ्युदयसाधका धर्मा यमा[2] उच्यन्ते। ते संक्षेपेण **अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहा यमाः** (यो. द. २, ३०) इति पञ्चैवोक्ताः। स्मृत्यन्तरे किञ्चिद्विस्तरेण—

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥** (म. ६,६२)

इति दशैवोक्ता अन्यत्र शास्त्रे विस्तरेण प्रपञ्चिता द्रष्टव्याः।

तदेषामहिंसादिसंस्काराणामात्मान्तरादात्मान्तरेऽपवर्गः समभिव्याहाराद्भवति। एवमदृष्टस्यापि कर्तृपुरुषे प्रत्यपवर्गः समभिव्या-

१. Evils. २. Moral precepts.

हाराद्भवति । धर्मादृष्टयोः प्रतिसंवेदनात्कर्तुर्जात्यायुर्भोगरूपकर्मफलप्रतिपत्तिरध्यात्माधिदैवपुरुषयोः समभिव्याहारादेव भवतीति समभिव्याहारो व्याख्यातव्यः।

इन्द्रियैर्बाह्यादर्थानां ग्रहणमाहारः। इन्द्रियद्वारेणात्मगुणानां बाह्ये जगति प्रतिपादनं व्याहारः। तदैव यदा बुद्धिपूर्वकमाभिमुख्येन भवति तदाऽभिव्याहारः। स एव द्वयोः परस्परं बुद्धिपूर्वकस्तदा समभिव्याहारः। यथा द्वयोर्भोजनासनशयनवचनादिभिःपरस्परसंस्कारादानप्रदाने भवतः स समभिव्याहार इत्यात्मकर्मापवर्गे समाख्या ।

तत्र समभिव्याहाराद्वेदवाचो धर्मजननेऽदृष्टसम्पादने भौतिककर्मोत्पत्तौ च सर्वक्रियाप्रकृतित्वमुपपादयन्नाह—

**बुद्धिपूर्वा वाक् प्रकृतिर्वेदे ॥१॥**

ज्ञानबलेत्युभयविधाया अपि क्रियाया इयं वैदिकी वाक् प्रकृतिर्भवति। वाच्यार्थावबोधनादियं ज्ञानक्रियेत्यर्थनिगमनाद् वेदवाक्ये निगमसंज्ञा। विहितेदृष्टार्थभावयित्री बलक्रिया। सा च पश्यन्ती नाम गुह्या चोदयित्री वागिति वेदवाक्ये मन्त्रसंज्ञा।

वेद इति वेत्तिविन्दत्योरुभयक्रिययोर्ग्रहणार्थं न ब्राह्मणवाक्यग्रहणार्थं तस्यामन्त्रत्वाच्छाब्दीभावनाभावात्केवलनिगमत्वात् सर्वक्रियाप्रकृतित्वानुपपत्तेः । ब्राह्मणवाक्यस्य चोदकत्वं त्वर्थप्रत्यासत्त्या पुरुषनिष्ठं न शब्दनिष्ठमिति सा केवलार्थी भावना।

१. Intercourse.

कचिद्वाक्यकृतिरिति पाठस्तु प्रामादिको मन्त्राणामपौरुषेयत्वादकृतकत्वादिति ।

ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥२॥

लोके मन्त्रप्रभावो मन्त्रस्यार्थवत्त्वं तु प्रसिद्धमेव । ब्राह्मणेऽपि तद्विधीयते । वेदस्य ब्राह्मणभागे कृता वाचां नाना गौणीसंज्ञास्तत्र प्रमाणम् । तथा हि—क्रियात्वविशेषान्मन्त्राणां संज्ञाः श्रूयन्ते । *योजनाद्यजुः, उत्थापनादुक्थं, समीकरणात्साम* । अपि च श्रूयते **तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी** (छां. ४,१६,१) तथा च जैमिनीयसूत्रं—**तच्चोदकेषु मन्त्राख्या** (२,१,३२)। अपि चैतेऽर्थसम्पन्ना ब्राह्मणेन विधीयन्त इति मन्त्राणां निगमत्वमप्युक्तम् ।

वेदवाचः सर्वक्रियाप्रकृतित्वं साधितम् । तत्तु बुद्धिपूर्वकमेवेत्याह—

बुद्धिपूर्वो ददातिः ॥३॥

बुद्धिपूर्वं व्याहृत्याचार्येणान्तेवासिने प्रदत्ता वाक् चोदयित्री दृष्टा । निगमपक्षेऽपि बुद्धिपूर्वकत्वमस्याः प्रसिद्धम् ।

तथा प्रतिग्रहः ॥४॥

यथाचार्येण बुद्धिपूर्वं सम्प्रदीयते तथैव बुद्धिपूर्वमन्तेवासिनोपसन्नेनावहितेन यदा प्रतिगृह्यते तदैव वीर्यवती दृष्टा । सेयं बुद्धिपूर्वा वैदिकी वाग् ज्ञानबलक्रिययोः प्रकृतिर्दृष्टा ।

यत्रास्या वाचो बुद्धिपूर्वकं विधिवद्दानप्रतिग्रहौ न भव-

तस्तत्र गुणाधानं न दृश्यते । नहि ब्रह्मास्त्रमभ्यस्यतो वटुकस्य मन्त्रोच्चारणेन शरसन्धानमभ्यस्यतो वटुकान्तरस्य शरो ब्रह्मास्त्रं भवति । नापि श्रवणपठनमात्रेण मन्त्रस्य चोदकत्वं क्वचिद् दृष्टम् । तस्मान्मन्त्रस्य पारमार्थिकमागमत्वमुक्तम् ।

**आत्मान्तरगुणानामात्मान्तरे कारणत्वात् ॥५॥**

तदेतत्सर्वं बुद्धिपूर्वकेण मन्त्रदानप्रतिग्रहरूपेण समभिव्याहारेणात्मान्तरगुणानामात्मान्तरे कारणत्वादेव सम्भवति नान्यथेति समभिव्याहारादात्मनि धर्मोपजन उक्तः । एतेन गर्भाधानादयः सर्वेऽपि चातुराश्रम्यविहिताः संस्कारा व्याख्याता वेदितव्या इति समभिव्याहारादात्मनि धर्माणामाधानं दर्शितम् ।

सन्त्यन्येऽपि बाह्यभावा पुरुषेण प्रतिपद्यमाना येषां दृष्टो-हेतुर्नोपपद्यते, तेऽदृष्टकारणका इत्यदृष्टं साधयन्नाह—

**तद्दुष्टभोजनेन विद्यते ॥६॥**

तददृष्टमस्तीति दुष्टभोजनेनानुमीयते ।

**दुष्टं हिंसायाम् ॥७॥**

न ह्यत्र विषादिपर्युषितादि वा स्वभावदुष्टं भोजनमभिप्रेतम् । यत्किञ्चिद् भोजनं शरीरे दोषधातुवैषम्यजननेन हानिकारकं तद्दुष्टम् । दृश्यते हि क्वचित्स्वभावतोऽदुष्टान्नदुग्धादिभोजनेनापि रोगसंप्राप्तिः । न च तत्र किञ्चिद्दृष्टं कारणमुपलभ्यते । तत्रादृष्टमेव कारणमनुमीयते । पुनः—

**तस्य समभिव्याहरतो दोषः ॥८॥**

स चादृष्टकारणको दोषः समभिव्याहारादेव भवति। पुनः—

तददुष्टेन विद्यते ॥९॥

न त्वयं दोषो भोजनकारितः सम्भवति। यदि वस्तुनिष्ठः स्यात् नित्यः स्यात्। तदेव दुष्टभोजनं भुक्तं क्वचिद् दोषं न जनयतीत्यनुमीयत अस्त्यदृष्टमस्ति चास्यात्मना तेन कश्चिद् सम्बन्धो यतोऽस्य सुखदुःखादिबाह्यभावानां समभिव्याहारात् संप्राप्तिर्भवतीति।

एवं समानदेशकालाभिजनानामपि पुरुषाणामहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाद्यात्मधर्माणामभ्युदयभेदः स्त्रीपुत्रपशुधनधान्यादिबाह्यार्थप्रतिसंवेदनभेदश्च दृश्यते। तत्तु नोपपद्यत ऋते प्राणिनामदृष्टात्। तस्मादस्ति पुरुषस्य कर्म। तच्च कृतं द्विष्ठं भवति। यत् संस्काररूपेणात्मनि सञ्चितं स धर्मः। यद् ग्रहनक्षत्रादिषु संस्काररूपेण स्थितं तददृष्टम्। तत्रापि धर्मादृष्टयोराश्रयभेदेऽपि यत् प्रतिसंवेदनं तत्समभिव्याहारादेव। धर्मासंकरोऽदृष्टासंकरो विनियोगाव्यभिचारस्तु समभिव्याहारस्य बुद्धिपूर्वकत्वात्। पुरुषे आत्मबुद्धिपूर्वकोऽधिदैवे चान्तरात्मबुद्धिपूर्वकः समभिव्याहारः। अन्तरात्मानभ्युपगमेऽबुद्धिपूर्वकस्य समभिव्याहारस्यानवकल्पात्। तथा च शास्त्रम्—

**यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः।**
**आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलम् ॥**
**एवमात्मा नाभिजानीते क्व गमिष्ये कुतोऽन्वहम्।**
**अन्यो ह्यस्यान्तरात्मास्ति यः सर्वमनुपश्यति ॥**

(ब्र. पु. २३७, २२–२३)

भूतात्मान्तरात्मनोर्विशेषमाह मनुः—

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम् ।
येन वेदयते सर्वं सुखं दुःखञ्च जन्मसु ॥
(म. १२, १२-१३)

सद्यः कालान्तरे वा फलाभिसन्धिनियमस्तु धर्मादृष्टयोः प्रीतेः समानकर्तृकत्वात्तयोः । सोऽयं पुरुषहिरण्यगर्भयोः समभिव्याहारः सर्वसमभिव्याहारमूलमुक्तम् ।

एतेन पुरुषशरीरसंभवे धर्मादृष्टेश्वरादयः सर्वेऽपि हेतवो यथायोगमुन्नीता वेदितव्याः । सर्वे शरीरकारणैकान्तवादाश्च निरस्ता वेदितव्याः ।

अथातः संयोगापवर्गसमभिव्याहारेषु प्रवृत्तिनियमम्[१]आह—

## पुनर्विशिष्टे प्रवृत्तिः ॥१०॥

पुनरिति प्रसक्तप्रकरणान्तरारम्भे शब्दः । संयोगादीनां प्रवृत्तिनियमः प्रक्रियत इति । कर्मवत्पिण्डयोः संयोगे यस्मिन्नधिकं कर्म तद् विशिष्टं[२] यस्मिन्न्यूनं तद्धीनम्[३], उभयोः कर्मसाम्ये समत्वम्[४] । तत्र विशिष्टात्कर्मापवर्गः प्रवर्तते हीने च प्रतिपद्यते ।

---

१. The Law governing the direction of flow of Spiritual Energy, Force and Matter. २. Higher potential. ३. Lower potential ४. Equal potential.

यस्मात्प्रवाहः प्रवर्तते तस्मिन् प्रवृत्तिरुच्यते। यथोच्चस्थलान्निम्नस्थले जलप्रवाहः प्रवर्तत इत्युच्चे प्रवृत्तिरुच्यते विशिष्टत्वात्। एवं समभिव्याहारेऽपि यस्मिन् संस्कारा बलवन्तस्तद् विशिष्टम्, यस्मिन्निर्बला तद्धीनम्। विशिष्टाद्धीने संस्काराः प्रवर्तन्ते।

**समे हीने वाऽप्रवृत्तिः ॥११॥**

वा शब्दः समहीनयोर्विकल्पे न प्रवृत्तिविकल्पे। हीनाद् विशिष्टे नास्ति प्रवृत्तिः। उभयोः समत्वेऽपि प्रवृत्त्यभावः। आचार्याद् विशिष्टादन्तेवासिनि हीने संस्काराः प्रवर्तन्ते।

**एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥१२॥**

एवं सर्वत्र संयोगे समभिव्याहारे च विशिष्टधार्मिकाद्धीनधार्मिके द्रव्यगुणकर्मणां प्रवृत्तिर्भवति।

पाकेऽप्ययमेवं[१] प्रवृत्तिनियमो द्रष्टव्यः। यावन्तः परमाणवो द्व्यणुकत्र्यणुकादिसमवायिकारणे भवन्ति तावन्तः संयोगाणवः समवाये साम्येन धार्यन्ते। ततोऽधिके संयोगाणौ द्रव्यं विशिष्टं[२] भवति। हीने च हीनं[३]मुच्यते। तत्र साम्यार्थे[४] विशिष्टाद्धीने तेजोऽणुप्रतिपादनं पाकः। समयोः[५] संयोगे नास्ति पाकः।

**तथा विरुद्धानां[६] त्यागः ॥१३॥**

---

१. In chemical Combination. २. Positive. ३. Negative. ४. Stability. ५. Neutral. ६. Opposite in nature as vice and virtue.

यथापवर्गे विरुद्धदिक्कयोः कर्मणोऽपवर्गान्नाशस्तथैव विरुद्ध-संस्कारयोः समभिव्याहारान्नाशः । पापसंस्काराः पुण्यसंस्कारै-र्विरुध्यन्त इत्यभिप्रायः ।

**हीने परे त्यागः ॥१४॥**

विरोधिनि हीने सति तस्य सर्वथा नाशः ।

**समे आत्मत्यागः परत्यागो वा ॥१५॥**

विरोधिकर्मणोः साम्ये उभयोर्वा नाशः ।

**विशिष्टे आत्मत्याग इति ॥१६॥**

अर्थादेव विरोधिनि विशिष्टे हीनस्यात्मनाशः । एवं पुण्य-पापसमभिव्याहारे ऋणधनसंस्काराद् विशिष्टस्य यदधिकं तच्छि-ष्यते परिपच्यते च । एतेन सञ्चितानां प्रारब्धानां चोभयविध-कर्मणां नाशस्य शक्यत्वात्प्रायश्चित्तोपपत्तिः[1] । तथा चोक्तम्— **निहन्याद् दुर्बलं दैवं पुरुषकारेण बुद्धिमानिति ।** तस्मात्तपो-ज्ञानवृद्धानां पुण्यात्मनां समभिव्याहार उपादेयो हेयश्च पापात्मना-मिति समभिव्याहारादात्मनि धर्माधर्मनिष्पत्तिरुक्ता ।

**इति षष्ठे प्रथमाह्निकम् ।**

## अथ षष्ठाध्याये द्वितीयाह्निकम्

अस्मिन्नाह्निके कर्मणां धर्मादृष्टजनकत्वव्यवस्थोच्यते—

**दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥१॥**

---

१. Propitiation of sin.

कृतस्य कर्मण आश्रयभेदाद्धर्मोऽदृष्टमिति द्वैविध्यमुक्तम्। फलमपेक्ष्य पुनरपि कर्मणो द्वैविध्यं भवति। जात्यायुर्भोगादिदृष्टफलकं कर्मादृष्टं सदपि दृष्टप्रयोजनमुच्यते भोगादिफलस्य दृष्टत्वात्। आभ्युदयिकं कर्म दृष्टं सदप्यदृष्टप्रयोजनमुच्यते धर्मरूपफलस्य दर्शनवर्जितत्वात्। अत्र फलस्वरूपभेदात्कर्मणां विभागो विवक्षितः, न फलकालभेदकृतदृष्टादृष्टजन्मवेदनीयत्वव्यवस्थया। नाप्याश्रयभेदविवक्षयेति द्रष्टव्यम्।

कर्मणो यत्र दृष्टफलाय विनियोगो नास्ति तत्राभ्युदयप्रयोजकं तु भवत्येव। नहि बुद्धिपूर्वस्य कर्मणो नाश उपपद्यते। तेन कर्मणां धर्मजनकत्वं नित्यं दृष्टफलकत्वं तु वैकल्पिकं निमित्तवशात्। तत्र सामान्येन धर्मादृष्टजनकान् नियमानाह—

**अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणादिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥२॥**

अभिषेचनादिनियमा अदृष्टाय कल्पन्ते। अदृष्टायेत्यदृष्टफलाय धर्मायेति। अपि वा दैववाचिनेऽदृष्टाय विनियोगादिति। अभिषेचनादयो नियमाः सामान्येनोक्ताः। एषां प्रपञ्चः शास्त्रे द्रष्टव्यः। तथाचोक्तम्—

**आगमोऽर्थः प्रजा देशः कालः कर्म च जन्म च।**
**ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः॥**
**(भा. ११,१३,४)**

आत्मन्यदृष्टरूपधर्मजनका इत्यर्थः।

अभिषेको नाम दीक्षादिषु मन्त्रपूतेन तीर्थजलेन स्नानम्। उपवासोऽनशनादिकृच्छ्राणि । प्राजापत्यचान्द्रायणादिव्रतानि द्रावणेन पापबन्धं शिथिलीकुर्वन्ति । ब्रह्मचर्यं वीर्यरक्षा ततश्चौजस्तेजोऽभिवृद्ध्याऽप्रतिघगुणोत्कर्षाद् विनेयेषु गुणाधानसामर्थ्यम् । गुरुकुलवासतोऽन्तेवासिनो गुरुशुश्रूषणादिसमभिव्याहाराद् गुणाधानम् । वानप्रस्थस्य तपस्विनः प्राणायामादितपोयोगादन्तःकरणद्रावणम्। शिथिलबन्धस्य पापस्य च स्वाध्यायादिना निरसनम् । तपःप्रधानं हि वानप्रस्थमुक्तम् । यथा पर्वतधातूनां तेजस्तापसंयोगेन द्रावणान्मलापनयनं शक्यते तथैव तपोयोगेनान्तःकरणद्रावणात्पापनाशः शक्यः । तपः इत्यात्मतेज उच्यते । यज्ञं द्रव्यदेवतयोर्मन्त्रद्वारा संगतिकरणेन विराट्पुरुषाप्यायनम् । दानं प्रसिद्धम् । प्रोक्षणमभिमन्त्रितजलेन मार्जनादिना सूक्ष्मपापशोधनम् । प्राङ्मुख उदङ्मुखः शान्तिकं पौष्टिकं वा कुर्यात् । दक्षिणाभिमुखः पैतृकमाभिचारिकं वा कर्म कुर्यादित्यादिदिङ्नियमाः । तत्तद्दैवत्यनक्षत्रस्थितेषु सूर्यचन्द्रादिग्रहेषु तत्तत्कर्म कुर्यात् । कृत्तिकास्वग्निमादधीतेत्यादिनक्षत्रनियमाः । अन्वानमर्धर्चशः, पादशः, पच्छोऽक्षरशः प्रतिलोममुच्चैरुपांशु जपेदित्यादि मन्त्रनियमाः । पूर्वाह्णेऽपराह्णे पौर्णमास्याममायां विषुवे कर्तव्यकर्मणां विधानं काल नियमाः । इत्यादीन्यन्यान्यपि चातुराश्रमविहितानिकर्माणि स्वभावत आभ्युदयिकानि नियमा उक्ताः । तत्र नियमानामभिक्रमनाशे प्रत्यवाये दृष्टा-

दृष्टफलकत्वे च नियामकमाह—

**चातुराश्रम्यमुपधा अनुपधाश्च ॥३॥**

ब्रह्मचर्यादिचातुराश्रमं कर्म संकल्पभेदाद् द्विविधमुपधाऽनुपधा चेति ।

**भावदोष उपधाऽदोषोऽनुपधा ॥४॥**

भावो नामाभिप्रायः। सोऽभिप्रायः कामो राग इति तस्य मूलमसत्येर्ष्यामायालोभादयो दोषाः। एभिरनुविद्धं कर्म भावदुष्टमुपधा भवति न काम्यमात्रमिति । धर्मस्थापनमुद्दिश्य कृतकारितानुमोदितो दुष्टवधोऽपि न भवति दोषमूलस्तस्मादेवंविधः कामोऽदोष एव । दोषमूलकेच्छाद्वेषाभ्यामेव कृतं कर्म दुष्टं भवति। यमर्थमुद्दिश्य सृष्टिः प्रवृत्ता तदर्थं क्रियमाणं सर्वमपि कर्म निर्दोषं भवति अभ्युदयाय च कल्पत इत्यभिप्रायः ।

उक्तो भावदोषस्तच्छुद्धिश्च । इदानीं समभिव्याहार्यभक्ष्यभोज्यादिद्रव्येषु संसर्गदोषं तच्छुद्धिं चाह—

**यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितञ्च तच्छुचिः ॥५॥**

इष्टा उपादेया रूपरसगन्धस्पर्शा यस्य द्रव्यस्य तदिष्टरूपरसगन्धस्पर्श द्रव्यम् । तेन सर्वमपि समभिव्याहार्यमन्नपानादिद्रव्यं विवक्षितम् । तद् यदि मलोपसृष्टं तदाभ्युक्षणेन मार्जनप्रक्षालनादिना शुद्धं भवति । यदा निर्मलमपि दुष्टसंसर्गात् संस्कारदुष्टं भवति तदा मन्त्रपूर्वकप्रक्षालनादिना शुचि निर्दोषं भवति ।

**अशुचीति शुचिप्रतिषेधः ॥६॥**

अत्राशुचिशब्देनार्थद्वयं ग्राह्यं संसर्गदुष्टमित्येकोऽर्थः ।

**अर्थान्तरञ्च ॥७॥**

भावदुष्टमित्यर्थान्तरमपि विवक्षितम् ।

यमनियमेत्युभयविधस्यापि धर्मस्य शास्त्र उपदेशः श्रूयते । सत्यं वद, धर्मं चर, मनो नियच्छ मा हिंस्यात्सर्वा भूतानीत्यादियमोपदेशः । एवं स्वाध्यायोऽध्येतव्यः, अग्निहोत्रं जुहुयात् । मा गृधः, तपश्चरेत्यादि नियमविधयः श्रूयन्ते । तत्र यमनियमयोः कतरो मुख्यधर्मः कतरश्च योग्य इति व्यवस्थापयन्नाह—

**अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद् विद्यते वाऽर्थान्तरत्वाद्यमस्य ॥८॥**

अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहादय आभ्युदयिका आत्मधर्मा यमा उच्यन्ते । तेषां बाह्यसाधनानपेक्षत्वादनुशीलनमात्रमनुष्ठानम् । अभ्युदयसम्पादनार्थमुपादीयमाना विहिता प्रोक्षणाभ्युक्षणादिशौचनियमास्तपोमन्त्राद्यनुष्ठानविधयश्च नियमा उच्यन्ते । एषां बाह्यसाधनापेक्षमनुष्ठानमुक्तम् । तत्र यमविरोधेन विधिवदनुष्ठीयमानोऽपि नियमोऽभ्युदयं न जनयति । छलेन चौर्येण हिंसया वञ्चनेनोपार्जितं विधिवत्प्रोक्षितमभ्युक्षितमपि द्रव्यं न शुचि भवति नचाऽभ्युदयं जनयति । भावदोषस्य संसर्गदोषादर्थान्तरत्वाद् बलवत्तरत्वाच्च । यमात्तु नियमाभावेऽभ्युदयो भवत्येवेति । वा शब्दोऽवधारणे । तथा च निरुपधानियमानुष्ठानाद्धर्मशुद्धिः । धर्मशुद्धया यमप्रतिष्ठा । यमप्रतिष्ठायां व्यवहारशुद्धिस्ततश्चाभ्युदय

इति फलितार्थः ।

अत्रार्थे दृष्टमपि हेतुमाह—

## असति चाभावात् ॥९॥

विधिवदनुष्ठीयमानेष्वपि नियमेषु यमाभावेऽभ्युदयस्याभावो दृश्यते । जटावल्कलधारिणो दण्डकन्थाकषायधारिणः शौचस्वाध्यायादिनानानियमसाधनपरायणा अपि लोभमोहमूढा लोकवञ्चनपरा भावदोषादभ्युदयविधुरा लोके भ्रमन्तो दृश्यन्ते । तथा च स्मृतिराहोपधानिन्दाम् ।

**वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।**
**न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥**

(म. स्मृ. २,६)

एतेन यज्ञयागशौचाचारादिनियमानामनुष्ठानमेव मुख्यो धर्म इत्ययं मूढवादो निरस्तः । यमानुशीलनमेव मुख्यो धर्मः । तस्य साधनमात्रत्वेन यागादिनियमानामुपादानमुक्तं न हि साध्यापेक्षया साधनस्य मुख्यत्वमुपपद्यते । यमानां व्यभिचारो हि भावदोषो भवति । यत्तु यज्ञस्य मुख्यत्वमुक्तं तत्कर्मात्मकेषु नियमेषु श्रेष्ठतमत्वादक्षय्यापूर्वजनकत्वादुक्तं न यमापेक्षयेति ।

## सुखाद्रागः ॥१०॥

रागो नामास्यात्मनो विषयेषु गर्धस्तृष्णा । सच रागः प्रतिपुरुषं भेदेन दृष्टः । कस्यचित्तपसि रागः । कस्यचिन्नृत्यगीतादिषु रागः । स च सर्वत्र सुखनिबन्धनो दृष्टः । यत्र विषयेऽयं

पुरुषः सुखं मन्यते तत्रास्य रागो भवति। पूर्वजन्मसु मुहुर्मुहुरभ्यस्तेषु विषयेष्वयं वासनावशात् सुखं मन्यते।

### तन्मयत्वाच्च ॥११॥

पूर्वाभ्यस्तविषयेष्वपि यद्विषयाः संस्कारा भूयांसः पटवश्च भवन्ति तत्र वासनाविशेषाद् रागः।

### अदृष्टाच्च ॥१२॥

देशकालनिमित्तापबन्धाद् यज्जातीयमदृष्टं विपाकोन्मुखं भवति तज्जातीयो रागो जायते। बुधग्रहोपलक्षितादृष्टविपाककाले विद्याशिल्पादिषु प्रीतिविशेषो जायते। एवमन्यदपि कर्मविपाकशास्त्रे द्रष्टव्यम्।

### जातिविशेषाच्च ॥१३॥

अनादिपरम्परया नानाजन्मकृतकर्माणि दैवरूपेण सञ्चीयन्ते। तेषां मध्यात्कानिचिदेवैकस्मिञ्जन्मनि शरीरमारभ्य जात्यायुर्भोगरूपफलाय कल्पन्ते। तत्र जातिविशेषादपि रागविशेषो जायते यथा पशूनां तृणादिषु रागविशेषः।

सुखादयः सर्वेऽपि हेतवः समुच्चयेन रागे विशेषाञ्जनयन्ति। एवं दुःखपूर्वका एत एव हेतवो द्वेषविशेषाञ्जनयन्ति।

### इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥१४॥

इच्छापूर्विका धर्माधर्मेषु विहिताविहितेषु प्रवृत्तिर्भवति। एवं द्वेषपूर्विका कर्तव्याकर्तव्येभ्यो निवृत्तिः। अयमत्र समुदितार्थः। सुखे ह्यस्य पुरुषस्य रागः। तदर्थं चास्य सर्वाः प्रवृत्तयः। सुखाय

प्रवर्तनं पुरुषार्थः। स चास्य स्वभावो न कथमपि परिहातुं शक्यः। तस्मान्नोपपद्यते निवृत्तिः।

सुखस्यैव परमोत्कर्षो मोक्ष उक्तः। न चापि मोक्षार्थं प्रवर्तनं बन्धस्य शरीरादेः कारणं सम्भवति। तस्मान्नेयं प्रवृत्तिर्दुःखमूलस्य शरीरस्य कारणं सम्भवति। पुनर्या प्रवृत्तिर्मोक्षार्थमुपात्ता तन्निबन्धनं कर्म बन्धाय भविष्यतीत्यपि नोपपद्यते। सत्यां च पुनः प्रवृत्तौ नोपपद्यते नैष्कर्म्यम्। यदि प्रवृत्तिमात्रं तन्मूलं कर्मैव वा बन्धकारणं स्यात्सर्वमेव विधीयमानं चातुराश्रम्यं हेयमापद्येत। तस्य प्रवृत्तिपूर्वकमनुष्ठेयत्वादिति। किं तावद् बन्धकारणमिति उपधैव बन्धस्य कारणं न प्रवृत्तिर्नापि कर्म बन्धकारणम्। लोभेर्ष्यामात्सर्यादयो दोषा उक्ताः। तत्पूर्विका या प्रवृत्तिः सैव बन्धस्य कारणं भवति। उक्तं च—

**उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः।**
**त्यागः सर्वोपधानां च सर्वदुःखव्यपोहकः॥**

(च. सं. शा. १,९३)

इत्युपधैव दुःखाश्रयस्य शरीरस्य ततश्च दुःखस्य हेतुर्भवति न प्रवृत्तिमात्रमित्यर्थः। अपि चोक्तं संन्यासतत्त्वे —

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।**

(गी. १८,२)

अनादिर्हि पुरुषस्य सुखार्था प्रवृत्तिरनादि च तत्पूर्वकं कर्म। तस्य संन्यासो नोपपद्यतेऽनादित्वात्। योऽयं संन्यासो विधीयते

स उपधाया एव सम्भवति, तस्या उत्पत्तिनिरोधधर्मकत्वादानित्यत्वात् । तस्मादाभ्युदयिकं कर्म काम्यं न भवति लोभादिदोषानुविद्धस्यैव कर्मणः काम्यत्वमुच्यते तस्यैव च संन्यासो विधीयते।

तथा च धर्मादयो भावा आत्मनः स्वाभाविका धर्मा नित्या अजन्याश्च। बुद्ध्यादय आत्मगुणास्तु आत्ममनसोः संयोगविशेषाद्दोषनिमित्ता उत्पत्तिविनाशधर्मका अनित्याश्च । अनादित्वं त्वेषां जीवात्मनोऽनादित्वात् । अनित्यत्वञ्चैषां सान्तत्वादात्मनो मोक्षोपदेशादिति ।

## तत्संयोगो विभागः ॥१५॥

उक्तमैकात्म्यम् । अविभक्तोऽप्ययमात्मा विभक्त इव नानात्वेन विद्यते । तस्येच्छाद्वेषादिभिर्यः संयोगः स एवास्य स्वप्रकृतितो विभागो नानात्वकारणं भवति । अथवात्ममनसोः संयोगविशेषान्मोक्षः । संयोगविशेषेभ्यश्चेच्छादयः । न च युगपत्संयोगद्वयंसम्भवति । मनसो व्यासज्यवृत्तित्वात् । इच्छादिसंयोगदशायां मोक्षविभाग इत्यर्थः ।

## आत्मकर्मसु मोक्षो व्याख्यातः ॥१६॥

इच्छादिभिर्दोषैरभिभवाद्धर्मादीनामधर्मत्वमुक्तं न स्वरूपतः । इच्छादिदोषेभ्यो धर्मादीनां यद् विमोचनं स मोक्षः । तत्संयोगानां कर्मजन्यत्वात्कर्मनाश्यत्वमप्युक्तम् । तस्मात् संयोगमोचनसामान्यात् मोक्षस्य कर्मत्वमुक्तम् । स च आत्मकर्मसु व्याख्यातः । इच्छादिभिर्विमुक्तानां ज्ञानादिभावानां परमोत्कर्षे मिथ्याज्ञान-

निबन्धनानां दोषाणां समूलोच्छेदे उपधाऽभावाच्छरीराभावस्ततश्च संसरणाभाव इति ।

इति षष्ठे द्वितीयाह्निकम् ।

## अथ सप्तमाध्याये प्रथमाह्निकम्

पाकजगुणनिरूपणं संख्याद्यनारम्भकगुणनिरूपणञ्च सप्तमाध्यायविषयः ।

### उक्ता गुणाः ॥१॥

रूपरसगन्धस्पर्शा गुणान्तरारम्भकाः संस्कारात्मका गुणा व्याख्याताः । तत्र समवायिगुण एव संयोगिनः सजातीयगुणेन सन्निकर्षं प्राप्य गुणान्तरत्वं प्रपद्यत इति सजातीयगुणान्तरारम्भकत्वं चैषामुक्तम् । यथा द्रव्येषु दिक्कालाकाशानां निष्क्रियत्वाद् द्रव्यान्तरारम्भकत्वं नास्ति । तथैव संख्यादिसप्तगुणानामसंस्कारत्वाद् गुणान्तरारम्भकत्वं नास्तीत्यप्युक्तम् ।

संख्यादिगुणान् विविच्याद्युराचार्यः रूपाद्यारम्भकगुणपरीक्षाशेषमाह—

### पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥२॥

पृथिव्यादीत्यत्रादिशब्दः कारणवाची न प्रभृत्यर्थः । तेन पृथिवी समवायिकारणं यस्य कार्यस्य तत्पृथिव्यादि । न पृथिवीप्रभृतीनीत्यर्थः । तेन पृथिव्यादिस्वरूपाणौ रूपादयो गुणा अनित्या बोध्या अणोरनित्यत्वात् । परमाणौ तु तत्र कार्यावस्थेऽपि

नित्या इति चकारार्थः ।

**एतेन नित्येषु नित्यत्वमुक्तम् ॥३॥**

तथा नित्ये परमाणौ रूपादयो नित्या बोध्याः ।

**अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥४॥**

एवमप्परमाणौ रूपरसस्पर्शा नित्याः । तेजःपरमाणौ रूपस्पर्शौ नित्यौ वायुपरमाणौ स्पर्शो नित्यः परमाणुनित्यत्वादिति ।

**अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥५॥**

अप्स्वरूपाणौ तेजःस्वरूपाणौ वायुस्वरूपाणौ च ते यथोक्ता एव कारणगुणा प्रादुर्भवन्ति न संयोगिगुणाः । यथा वाय्वणौ सत्यपि तेजःसंयोगिनि स्पर्श एवारभ्यते न रूपमित्यादि सर्वत्र योज्यम् । स चारब्धगुणोऽणोरनित्यत्वादनित्यो भवति ।

**कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥६॥**

समवाये समवायि संयोगीति द्विधा द्रव्यस्य कारणता भवति । तत्र समवायिगुणपूर्वकाः समवाये गुणाः प्रादुर्भवन्ति न स्वातन्त्र्येण संयोगिगुणपूर्वकाः । पाके तु गुणारम्भे विशेषः । पाकस्तु संयोगमात्रमुभयोः समानम् । नात्राश्रयाश्रयिभावो विद्यते । तेन संयोगिनोरुभयोः समानकारणता, तस्मात्पाके उभयगुणपूर्वकाः सान्निकर्षजा गुणाः प्रादुर्भवन्तीति विशेषः ।

इह पाके लाघवार्थं प्रतिपन्नैः काश्चित् संज्ञा कृता वेदितव्याः । समवाये समवायि संयोगि चेति कारणद्वयमुक्तम् । तत्र यः संयोग्यणुः स पीलुरुच्यते । सर्वोऽपि समवायः पिठरोऽभि-

धीयते। सजातीयद्वित्र्याद्यनेकपरमाणुसमूहात्मकः समवाय्युक्तः। तत्र यावन्तः समवायिनि परमाणवस्तावन्तः पीलव उपष्टभ्य परितो भ्रमन्तो विद्यन्ते, इति सामान्यतः कल्प्यते। यत्रानयोः समा संख्या तद् द्रव्यं सममुच्यते। यत्राधिकाः पीलवः तद् द्रव्यं विशिष्टं भवति। यत्रोनास्तद् द्रव्यं हीनमुक्तम्। तत्र संयोगे **हीनसमविशिष्टेभ्यः परस्वादाननियमो व्याख्यातः (६,१,१२)।**

पिठरे तेजःपीलूनामादानप्रदानात्मको व्यापारः पाक इति समाख्याबलादेव लभ्यते। पिठरे बाह्यपरिधौ ये तेजःपीलवो विद्यन्ते तत्रैव संयोगसम्भवात् पृथिव्यामेव च पाक इति पृथिवीपिठरस्तेजःपिलुत्रानीति गम्यते। अन्यथा पाकासम्भवात्। तथा चोक्तम् — **आग्नेयं कनकं प्रोक्तं सर्वलोहानि वा पुनः।** इत्यादि। पाके क्वचिदग्निजलापेक्षा संयोगशैथिल्यार्था इत्यादयो हेतव उन्नेयाः। एतेन पाकजसंयोगव्याख्यानेन पृथिव्यामब्द्वारकः संयोगः स्नेहो, वायुकृतः संयोगो व्यूहश्च व्याख्यातो वेदितव्य इति।

इदानीं संख्यादयो गुणाः परीक्षणीयाः यद्यपि संख्याया एकद्रव्यवृत्तित्वसामान्याद् रूपादिभिः साहचर्यात्तदनन्तरमुद्देशसूत्रे ग्रहणं विहितम्। तथापि परिमाणस्य विभुपरिच्छिन्नोभयवृत्तित्वात् संख्यायाः पुनः पृथक्त्वसाहचर्यादादौ परिमाणं परीक्ष्यते।

**एकद्रव्यत्वात् ॥७॥**

विभुपरिच्छिन्नोभयवृत्ति परिमाणम्। तत्र परिच्छिन्नानामेक-

द्रव्यत्वात् परिमाणव्यवस्थामाह—

**अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥८॥**

एकद्रव्यखण्डे कणात्मकेऽणुसंज्ञा तत्राणुशब्दो नित्यपुंल्लिङ्गः। स च द्रव्याणुः पुनर्महान् वा भवति अणुर्वा भवतीत्यत्राणुशब्दो विशेषणमल्पत्ववाची महत्त्वप्रतियोगी। तस्मिन्नणौ अणुत्वमहत्त्वयोः परिमाणयोरुपलब्ध्यनुपलब्धी युगपदविरोधेन भवतः इत्यपेक्षाकृतत्वान्नित्ये व्याख्यातेऽणुत्वमहत्त्वे। तथाहि—त्र्यणुकं द्व्यणुकापेक्षया महत् चतुरणुकापेक्षया त्वणु। एवं त्र्यणुकस्याणुत्वमहत्त्वयोरुपलब्ध्यनुपलब्धी नित्ये उक्ते। न च रूपादिवदनित्ये। कृष्णत्वोपलब्धिकाले नास्ति श्वेतत्वोपलब्धिरिति।

अपि च परमाणोरनुपलब्धिर्यदि नित्या स्यात्तर्हि तत्पूर्वकं कार्यमपि नित्यमनुपलब्धं स्यात्। तत्तु नास्ति। तस्मादस्ति परमाणावुपलब्धिबीजं नित्यम्। एवं सुवर्णखण्डस्योपलब्धिर्यदि नित्या स्यात् तत्कारणस्य परमाणोरपि नित्या स्यादुपलब्धिरित्युभयोर्नित्यत्वमुक्तम्। पुनर्नहि धर्मेभ्योऽभ्यधिकः कश्चिद्धर्मीभूतोऽर्थ उपलभ्यते। यत्किंचिदुपलभ्यते तद्धर्मिगतधर्ममात्रमेव। तस्माद्धर्मिणोऽनुपलब्धिर्नित्योक्ता। तथापि धर्मोपलब्ध्या धर्मी तूपलभ्यत एव। न तदुपलब्धौ काचिदनुमानापेक्षाऽस्तीति नित्योक्ताऽस्योपलब्धिरिति। यदि सर्वथाऽनुपलभ्यः परमाणुः स्याद् योगेनाप्यस्योपलब्धिर्न सम्भवेत्। यथा देशकालयोरनुपलब्धि र्नित्योक्ता योगेनापि हि तयोरुपलब्धिर्नास्ति। इन्द्रियेण यत्परमाणोर-

ग्रहणं तत्तु सौक्ष्म्याद् विषयानवगमादिति ।

**कारणबहुत्वाच्च ॥९॥**

चकारात्समवायग्रहणं । समवाये कारणबहुत्वाद् सन्निकर्षाच्च गुणोत्कर्षः । पुनः संयोगिबहुत्वाद् द्रव्यं महीयते, ततश्च ग्राह्यगुणस्य महत्त्वादुपलब्धिर्भवति ।

उक्तैकद्रव्येष्वणुत्वमहत्त्वव्यवस्था । विभूनामिदानीमुच्यते ।

**अतो विपरीतमणु ॥१०॥**

अण्विति नपुंसकवचनं विशेषणत्वद्योतनार्थम् । आकाशादि विभुष्वणुशब्दो निरवयवत्वादतिसौक्ष्म्ये । देशकालाकाशानामात्मनश्च निरपेक्षे अणुत्वमहत्त्वे नित्यानुपलब्धे च । भक्त्याभावान्महानपि सन्नाकाशोऽणुः । एवं कालादयोपि ।

**अणु महदिति तस्मिन् विशेषभावाद् विशेषाभावाच्च ॥११॥**

विभुषु देशकालादिषु यदणुत्वं तत्परिच्छिन्नस्याणुत्वाद् विशिष्टम् । तत्र ह्यणोः परिमाणकृतं परस्परापेक्षमणुत्वम् । देशादीनां तु सौक्ष्ममात्रमणुत्वम् । एवमेषां महत्त्वमपि ततो विशिष्टम् । अणूनां तावद् बहुत्वान्महत्त्वम् । देशादीनां व्यापकत्वादखण्डत्वाच्च महत्त्वमिति विशेषः । अणुषु तारतम्यादणुत्वमहत्त्वयो स्तादृशस्तारतम्यकृतो विशेषो नास्ति । विभुपरिमाणं श्रुतिराह— **अणोरणीयान्महतो महीयान्** इति । तत्र विभुष्वेकत्वादिव्यवहारो भाक्तः इत्याह—

एककालत्वात् ॥१२॥

दृष्टान्ताच्च ॥१३॥

सूर्योदयादुदयान्तरं यावत्काल एकं दिनं, अत्र सूर्यसंक्रमणं दृष्टान्तः । एवं मासर्तुवर्षयुगादीनि घटीपलविपलादीनि च कालमानं भाक्तम् । एकांगुलपरिमितो देश एकाङ्गुलमत्राङ्गुलं दृष्टान्तः । एवं हस्तदण्डयोजनादीनां देशमानं भाक्तम् ।

यावता प्रयत्नेन कर्षमात्रं द्रव्यमेकांगुलप्रतिक्षणगत्या चलति, स एको वेगः कर्मणो भाक्तं मानम् । एवं गुरुत्वादिक्रिया-गुणानां भाक्तं मानं द्रष्टव्यम् । एवं सर्वत्र देशकालदृष्टान्तापेक्ष-योष्णत्वशीतत्वगुरुत्वादीनां भाक्तं मानमेककालत्वाद् दृष्टान्ताच्च द्रष्टव्यम् ।

अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः॥१४॥

कर्मणां कर्माभावाद् गुणानां च गुणाभावादिति ।

कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः॥१५॥

कर्माणि कर्मणैव दृष्टान्तेन मीयन्ते, गुणाश्च गुणदृष्टान्तेनेति विभूनां भाक्तमाने नियमः ।

अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥१६॥

कर्मगुणेषु अणुत्वमहत्त्वव्यवस्था तु विभुवद् द्रष्टव्या ।

एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥१७॥

परिच्छिन्ने समानाश्रये दीर्घत्वह्रस्वत्वयोर्विशेषैराकृतिनिष्पत्तिः तेन सर्वमपि परिच्छिन्नं वस्तु मूर्तिवदुक्तम् । तस्मान्मूर्तिमान्

परमाणुः । तदुपलब्ध्यनुपलब्धी पूर्ववद् व्याख्याते नित्यश्चास्याकारः ।

**अनित्येऽनित्यम् ॥१८॥**

अण्वाद्यनित्यस्यानित्य आकार इति ।

**नित्ये नित्यम् ॥१९॥**

नित्यस्य परमाणोर्नित्य आकारः ।

**नित्यं परिमण्डलम् ॥२०॥**

नित्यं परिमाणं परिमण्डलमभ्युपगम्यते । त्र्यस्राद्याकारस्तत्कार्यत्वादनित्यः । ननु परमाणुराकुञ्चनप्रसारणशीलश्चोक्तः । तथा सति कथमस्य पारिमाण्डल्यं नित्यं स्यादिति । यद्याकुञ्चनप्रसारणनिमित्तात्परमाणोराकारः कथमपि व्यापद्येत, निमित्तापाये पुनः प्रकृतिं गत्वा परिमण्डलो भवतीति पारिमाण्डल्यस्य सांसिद्धिकत्वं नित्यत्वं च न व्याहन्यते, विकारापेक्षया प्रकृतेर्नित्यत्वादिति।

तत्र विभूनां नित्यमहत्त्वे प्रमाणमाह—

**अविद्या च विद्यालिङ्गम् ॥२१॥**

प्रतियोगिनोरितरेतराभावेनावस्थानं नित्यम् । यदा दिनं न विद्यते, तदा रात्रिर्विद्यते, एवं रात्र्याभावे दिनप्रतिपत्तिरिति विपरीतलिङ्गेनानुमानं भवति ।

**विभवान्महानाकाशस्तथाचात्मा २२॥**

प्रतियोगेनावस्थिते अणुत्वमहत्त्वे । यत आकाशस्य पारिच्छिन्नम् ।

न विद्यते, तस्माद् विभुराकाशः, विभवान्महांश्चानुमीयते। एवमात्मापि विभुर्महाँश्च विज्ञायते। यद्विभु तन्न परिच्छिन्नम्। यच्च परिच्छिन्नं तन्न विभु भवतीति।

### तदभावादणु मनः ॥२३॥

प्रतिशरीरनियतत्वाच्छरीरान्तरेषु व्याप्त्यभावान्मनसो विभुत्वं न विद्यते। तदभावादणु मनः। अत्रापि विपरीतलिङ्गेनानुमानम्।

### गुणैर्दिग्व्याख्याता ॥२४॥

देशनिष्ठयोः परत्वापरत्वयोः सकलजगद्व्यापित्वाद् देशस्य व्यापकत्वं महत्त्वं चानुमीयते, तन्निष्ठत्वात्तयोः। लिङ्गं ह्यनुविधीयते लिङ्गीति।

### कारणेन कालः ॥२५॥

कारयति कलयति जगद्भावानिति कालः। कलनाया अनादित्वाद् व्यापको महाँश्च कालः।

इति सप्तमे प्रथमाह्निकम्।

---

## अथ सप्तमाध्याये द्वितीयाह्निकम्

### रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥१॥

परिच्छिन्न आमलकादौ एकत्वबुद्धिः प्रसिद्धा। तदेकत्वं नाम द्रव्यगुणो न रूपादिगुणेष्वन्तर्भवति व्यतिरेकेण ग्रहणात्, तस्माद् गुणान्तरमेकत्वम्।

### तथा पृथक्त्वम् ॥२॥

तथा परिच्छिन्नानामामलकानामन्योन्यस्मात्पृथग्ग्रहणं दृष्टम् । पृथक्त्वमपि द्रव्यगुणो रूपादिभ्यो व्यतिरेकाद् गुणान्तरम् ।

द्वित्र्यादिपरार्धान्तासु संख्यासु एकत्वपृथक्त्वे सर्वत्र समाने । प्रथम आमलके एकत्वं पृथक्त्वं च समानम् । किन्तु संख्याकृतमेकत्वं विशेषः । द्वितीय आमलके एकत्वं पृथक्त्वं समानं किन्तु संख्याकृतं द्वितीयत्वं विशेषः । एवं तृतीये त्रित्वं विशेषः । तत्र एकत्वपृथक्त्वयोः सतोर्द्रव्येषु या पुनर्द्वित्वत्रित्वादिविशेषबुद्धिः सा संख्यानिमित्ता ।

**एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥३॥**

गुणेषु गुणाभावादिति व्याख्यातम् ।

**निःसंख्यत्वात्कर्मगुणानां सर्वैकत्वं न विद्यते ॥४॥**

नाना हि कर्माणि गुणाश्च लोकेऽन्योऽन्यपरिच्छेदेन गृह्यन्ते । एकद्रव्यगतं कर्म द्वितीयद्रव्यगतकर्मणः परिच्छेदेन गृह्यते । एवं रक्तत्वमपि द्वयोः रक्तयोः परिच्छेदेन गृह्यते । तत्कथं कर्मगुणानां विभुत्वमिति । तत्राह—

**भ्रान्तं तत् ॥५॥**

नायं तर्कः साधुः । न ह्येवं कर्मगुणानां विभुत्वं व्याहन्यते ।

**एकत्वाभावाद् भक्तिस्तु न विद्यते ॥६॥**

योऽयं सर्वैकत्वाभावो न स कर्मगुणानां विभुत्वं व्याहन्ति भक्तिं वा साधयति । मूर्तिव्यवधिविशिष्टा हि भक्तिर्भवति

-यथाणूनाम् । विभूनां मूर्तिव्यवधिविशिष्टत्वं प्रतिषिध्यते न विच्छेदः। परमाण्वपबद्धदेशे आकाशाभावादाकाशस्य विविक्ततोक्ता पुरस्तात् । एवं विभुत्ववचनात्कर्मगुणानां भाक्तिः प्रतिषिद्धा न विविक्तता ।

न चात्मदेशकालेषु विभुत्वसामान्याद् गुणकर्माकाशवद् विच्छेदापत्तिरिति वाच्यम् । तेषां विभुत्वसामान्येऽपि धर्मविशेषयोगात्। तथा हि विभुः शाश्वतः कलनात्मकश्च कालः । विभुः शाश्वतो ध्रुवश्च देशः । विभुः शाश्वतः कूटस्थश्चात्मेति सर्वपदार्थव्यतिभेदकमविच्छेद्यं च तत्त्वं शाश्वतमुच्यते ।

**कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥७॥**

नानाकारणसमूहः कार्यम् । कारणेभ्यः पृथक् कार्यं नास्ति। एवं कार्यात्पृथक् कारणानां ग्रहणं नास्तीति कार्यकारणयोः परस्परेण पृथग्भावो नास्ति। यैवैकत्वबुद्धिः कार्ये भवति, सैव कारणेष्वपि भवति । न चामलकयोरिव द्विष्ठमेकत्वं कार्यकारणयोर्विभागेन गृह्यते, तस्मात्कार्यकारणयोः परस्परेणैकत्वैकपृथक्त्वप्रतिषेधः ।

**एतदनित्ययोर्व्याख्यातम् ॥८॥**

पूर्वेण गतार्थं सूत्रम् । संयोगविभागपरीक्षामाह—

**अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥९॥**

संयोग इति भावे प्रत्ययः । तेन संयोजनमुभयोर्मिलनरूपव्यापारो जन्यः संयोगः । यत्र तु करणे प्रत्ययस्तत्र संयुज्यतेऽने-

नेति संयोगो नाम द्रव्यगुणविशेषः। स चायश्चुम्बकयोरिव चेष्टापूर्वकपरस्परधारणाकर्षणयोग्यतावच्छिन्ना द्रव्यशक्तिः। स द्रव्यगुणः संयोगोऽजो नित्यश्चोक्तः।

योऽयं संयोजनरूपो जन्यः संयोग उक्तः स संयोगगुण सहितेन कर्मणा जन्यते, नैकतरेणेति। कर्मणा पृथक्स्थिताः परमाणवोऽन्योऽन्यस्य समीपं नीयन्ते। ततश्च तेषां संयोगमण्डलस्पर्शात्संयोगाः व्याप्रियन्ते। तेन परमाणवः परस्परधारणाकर्षणैर्विधृता कार्यरूपेणावतिष्ठन्ते। संयोजकं कर्म तु निवर्तते। संयोगसहभावित्वादवक्षेपणं तु क्रियारूपेण वर्तते। यत्तु केवलकर्मजन्यं द्रव्याणां मिलनमात्रं तत्संसर्गमात्रं स संयोगगुणाद्भिन्नः। यथामलकयोर्मेलनं संसर्गो न संयोगस्तयोः संयोगचेष्टाभावात्।

तत्र यत्संयोजकं कर्म तदेकतरस्मिन् वा स्यादुभयोर्वा। यत्त्वेवं संयुक्तैरन्यस्य संयोगः स संयुक्तैः संयोगः संयुक्तसंयोग उच्यते न स संयोगजः संयोग इति ध्येयम्।

**एतेन विभागो व्याख्यातः ॥१०॥**

एवं विभागोऽपि जन्योऽजश्चेति द्विविधो भवति। अत्राप्यन्यतरकर्मज उभयकर्मजो विभागगुणजश्च जन्यो विभागः। विभागो नाम द्रव्यगुणस्त्वजो नित्यश्च द्रष्टव्यः।

**संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥११॥**

गुणे गुणाभावादिति।

**कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ॥१२॥**

यथाणूनां बहुत्वाद् द्रव्ये महत्त्वं जायते एवमणुकर्मणां संयोगे महत्कर्म जायते। अणुगुणानां संयोगे महान् गुणो निष्पद्यते। भाक्तत्वं तु अणुत्वमहत्त्ववद् व्याख्यातम्।

**युतसिद्ध्यभावात्कार्यकारणयोः संयोगविभागौ न विद्येते ॥१३॥**

पृथक्स्थितयोर्योगो युतिः। कारणेभ्यः पृथक् कार्यं न सम्भवति। कार्यकारणयोः पृथक्त्वाभावाद् युतिर्नोपपद्यते। ततश्च संयोगविभागानुपपत्तिः।

द्रव्यगुणकर्मसु परस्परसम्बन्ध उक्तः। स च त्रिविधो-भवति, संसर्गसम्बन्धः, संयोगसम्बन्धः समवायसम्बन्धश्चेति। तत्र कीदृशः शब्दार्थसम्बन्ध इति विचार्यते—

**गुणत्वात् ॥१४॥**

शब्दः सन्निकृष्टगुणो विज्ञायते रूपादिवत्।

**गुणोऽपि विभाव्यते ॥१५॥**

रूपसंस्काराः स्वाधिष्ठानसमवेता भवन्ति। तस्मान्निःसृताः क्रियासंस्कारैर्वाह्यमानाः स्ववर्त्मनि स्थिता युक्त्या देशान्तरेऽप्याकाशे विभावयितुं शक्यास्तत्र चेन्द्रियसन्निकर्षाद् गृह्यन्ते।

---

१. The impulses of organic properties, like colour and sound, emanating from their source can be projected in ether and amplified even at a distance by a

किन्तु शब्दसंस्काराणां वाच्यार्थेन कोऽपि सम्बन्धो नोपलभ्यते येनार्थस्य शब्दाधिष्ठानत्वमुपपद्येत ।

निष्क्रियत्वात् ॥१६॥

शब्दस्य निष्क्रियत्वादर्थेन संयोगसम्बन्धो न सम्भवति क्रियासहचरत्वात्संयोगस्य ।

असति नास्तीति च प्रयोगात् ॥१७॥

नास्ति घट इत्यविद्यमानेन घटेन घटशब्दस्य संसर्गोऽपि नास्ति तथापि घट इत्युक्तेऽर्थोऽवबुध्यते घट इति ।

शब्दार्थावसम्बद्धौ ॥१८॥

तस्माच्छब्दार्थयोः संयोगसंसर्गसमवायसम्बन्धानामेकतमोऽपि नोपलभ्यते ।

संयोगिनो दण्डात्समवायिनो विशेषाच्च ॥१९॥

दण्डिपुरुषस्य दण्डात्संयोगसम्बन्ध उपलभ्यते । शब्दार्थयोस्तादृशः संयोगो न दृश्यते । समवाये सति समवायिनो विशेषगुणोपलब्धिर्दृश्यते । अत्र त्वर्थविकारे तदनुविधो विशेषो नोपलभ्यते शब्दे । तस्मात्—

सामयिकः शब्दार्थप्रत्ययः ॥२०॥

---

suitable contrivance as in Radio and Television and thus, seen and heard, produce the idea of their source. But the thing or the meaning of the word is not its source of emanation and has no such other relationship with it.

अनेन शब्देनायमर्थो ग्राह्य इत्येवंविधो लोके सन्नियमः समयः। तेन समयेन लोके शब्दादर्थः प्रतीयते न शब्दार्थयोः सांसिद्धिक सम्बन्धेनेति। परत्वापरत्वे आह—

**एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च ॥२१॥**

अन्योऽन्यापेक्षा परत्वापरत्वबुद्धिः। सा च पुनः दिक्कृता, कालकृता, परिणामक्रमकृता चेति त्रिविधा। तत्र देशे समीपस्थमपरं दूरस्थं च परम्। एवं समीपकालघटितमपरं दीर्घकाले घटितं च परं भवति।

**कारणपरत्वात्कारणापरत्वाच्च ॥२२॥**

परिणामक्रमे कार्यकारणपरम्परायां वर्तमानक्षणादतीतानागतेषु सन्निकृष्टेष्वपरत्वं विप्रकृष्टेषु परत्वम्।

**परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥२३॥**

गुणे गुणाभावादित्येव।

**कर्मभिः कर्माणि ॥२४॥ गुणैर्गुणाः ॥२५॥**

कर्मसु परत्वापरत्वे कर्मापेक्षे। गुणेषु गुणापेक्षे।

द्रव्यगुणकर्मसामान्यविशेषा इत्येते पञ्च पदार्थाः परीक्षिताः। तत्राप्यनात्मद्रव्यगुणा विशेषेण परीक्षिताः। बुद्ध्याद्यात्मगुणानां विशेषपरीक्षणात्प्राक् समवायं नाम षष्ठं पदार्थं निरूपयन्नाह—

**इहेदमिति यतः कार्यकारणयोः स समवायः ॥२६॥**

उक्तः संयोगो नाम सम्बन्धः। स च द्रव्याणां द्रव्यैर्गुणस्य गुणेन कर्मणश्च कर्मणा। स पुनः पृथक्स्थितानां संयोगाज्जायत इति युतसिद्धो दृष्टः। एतस्मात्संयोगसम्बन्धाद् भिन्नोऽपरोपि सम्बन्धो दृश्यते यथा गुणगुणिनोः सम्बन्धः। स त्वौत्पत्तिको दृष्टो न युतसिद्धो, नहि गुणगुणिनोः पृथक्त्वं क्वचिदासीत्। एवंविधोऽयुतसिद्ध औत्पत्तिकः सम्बन्धः समवायसम्बन्ध उच्यते। स च द्रव्ये गुणकर्मणां समवायो नित्यो विद्यते। द्रव्यगुणकर्मणां द्रव्यं कारणमुक्तम्। कारणसम्बन्धाद्गुणकर्मणां कार्यत्वं तु भाक्तमौपचारिकं वोक्तम्।

द्रव्येष्वप्येवंविधः समवायो दृष्टः। नानाकारणसमूहात्मकं कार्यद्रव्यं भवति। कार्ये कारणानां पृथक्स्थितानां संयोगात् सम्बन्धः। किन्तु कार्येण पुनः कारणानां युतिर्न सम्भवति, पृथक्त्वाभावात्। तेन द्रव्ये कार्यकारणसम्बन्धोऽपि समवाय उक्तः।

पृथिवीप्रभृतयश्चतुर्विधा एव परमाणवः संयोगेन कार्यमारभन्ते। नानाविधानि च कार्याणि स्वस्वलक्षणविशिष्टानि दृश्यन्ते। न च परमाणूनां यादृच्छिकसंयोगमात्रेण कार्येषु लक्षणनियम उपपद्यते। तस्मात्कार्ये परमाणूनां दिग्देशविशिष्टः कश्चित् संस्थानियमो गम्यते यतो लक्षणव्यवस्थोपपत्तिरिति।

यावान्देशः कार्येणापबद्धस्तस्मिन्नेव देशे कारणान्यपि विद्यन्ते, तस्मादिह कार्ये कारणानीति सादेश्ये सप्तमीबलात्

प्रयोगो द्रष्टव्यः। तदाह कार्यकारणयोः सम्बन्धे यत इह पृथिवीहापः इह तेजःपरमाणव इह च वायुपरमाणव इत्यादि दिग्देशविशिष्टः परमाणुसन्निवेशप्रत्ययो जायते स समवायः। नित्यसमवायपक्षेऽपीह द्रव्ये गुणकर्मणी इति प्रत्ययो भवत्येव।

इहेति पुनराश्रयाश्रयिभावात् प्रत्ययः। इहाश्रये आश्रितम्। इह द्रव्ये गुणकर्मणी। इह कारणेषु कार्यमित्याश्रयाश्रयिभावेन यः सम्बन्धः स समवायः। किं विषय आश्रयाश्रयिभाव इत्याह कार्यकारणयोरिति विषयसप्तमीबलात् कार्यकारणविषयः, कारणकारणविषयश्च कारणानां बहुत्वादिति। कार्यस्यानेकत्वानुपपत्तेर्नास्ति कार्यकार्यविषय आश्रयाश्रयिभावः। तत्र कार्यकारणविषये कार्यमाश्रयी कारणमाश्रयः। कारणानां बहुत्वात् तद्विषये तु य आश्रयः स समवायी ये चाश्रितास्ते संयोगिन उच्यन्ते इत्युक्तं पुरस्तात्। सच संयोगी पुनरेकाणुकः समवायात्माऽनेकाणुको वा भवति। अयं तु द्रव्यसमवायः संयोगपूर्वकत्वात्संयुक्तसमवायोऽनित्यश्चोक्तः।

**द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥२७॥**

बुद्ध्यपेक्षत्वाद् भावमात्रोऽयं समवायस्तस्मान्न द्रव्यं न गुणो नापिकर्म।

**तत्त्वम्भावेन ॥२८॥**

समवायस्य भावात्समवायत्वमुक्तं न जातितोऽविशेषादिति।

**इति सप्तमे द्वितीयाह्निकम्।**

## अथाष्टमाध्याये प्रथमाह्निकम्

इदानीं द्वाभ्यामध्यायाभ्यां बुद्ध्यादय आत्मगुणाः परीक्ष्यन्ते। तत्राष्टमस्य प्रथमान्हिके ऐन्द्रियकं प्रत्यक्षं, द्वितीये बुद्ध्यपेक्षं प्रत्यक्षं विचार्यते।

द्रव्येषु ज्ञानं व्याख्यातम् ॥१॥

द्रव्येषु ज्ञानमिति विषयसप्तमीपक्षे द्रव्यविषयं ज्ञानमुक्तं भवति। अभिव्याप्तिपक्षे तु द्रव्यनिष्ठं ज्ञानं द्रव्येषु ज्ञानमुक्तं भवतीत्यर्थद्वयप्रसक्तौ प्रकृते एकतरस्य व्युदासे हेत्वदर्शनाद्-द्रव्येषुज्ञानमितिश्लिष्टार्थं वचनं गृह्यते। तेन सर्वमेव द्रव्यजातं ज्ञानधर्मकं ज्ञेयं चेतीह विवक्षितं गम्यते।

प्रत्यक्षं लैङ्गिकं चेति द्विविधं ज्ञानं व्याख्यातम्। तत्रेन्द्रियार्थसंस्कारयोः साक्षात् सन्निकर्षादेक एवोभयमध्यपातिविशेष-संस्कारो निष्पद्यते। तस्येन्द्रियसंस्कारापेक्षया यो विशेषः स इन्द्रियसंस्कारोपारूढेन पुरुषस्य ज्ञानसंस्कारेणाध्यवसीयते रक्तं पीतं श्वेतमित्यादि पुरुषेऽध्यवसायः प्रत्यक्षमुच्यते। एवं रस-गन्धस्पर्शेष्वपि साक्षात् प्रत्यक्षं व्याख्यातम्। संख्यादीनामसं-स्कारात्मकत्वान्नास्तीन्द्रियसंस्कारैः साक्षात् सान्निकर्षस्तस्मा-न्नैषामैन्द्रियकं प्रत्यक्षं सम्भवति। एषां यत्प्रत्यक्षं तद्बुद्ध्यपेक्ष-मुक्तम्। तत्रादौ साक्षात्प्रत्यक्षं परीक्ष्यते—

तत्रात्मामनश्चाप्रत्यक्षे ॥२॥

आत्मनो मनसश्च बुद्ध्यादिगुणानां संस्कारात्मकत्वेऽपि इन्द्रियसन्निकर्षासम्भवान्नास्त्यैन्द्रियकं प्रत्यक्षम्। ग्रहितृत्वग्रहणत्वाभ्यामनयोर्ग्राह्यत्वप्रतिषेधार्थं वचनं तेनैव तस्याग्रहणादिति।

**ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥३॥**

अस्मिन् प्रकरणे ज्ञानशब्देन ज्ञाननिष्पत्तिविधिरित्यर्थो वेदितव्यः। परिभाषेयं लाघवार्थम्। स च ज्ञाननिष्पत्तिविधिरित्थम्। अनात्मद्रव्यनिष्ठज्ञानस्य विषयोभूतस्यात्मज्ञानेन बुद्ध्या यद् ग्रहणं सा प्रतिपत्तिः, सोऽध्यवसायः।

द्विभूमिकोऽयं प्रत्यक्षज्ञाननिष्पत्तिविधिर्विद्यते। धर्मपरिणामो लक्षणपरिणामश्चेति। तत्र सान्निकर्षाद्यः संस्कारपरिणामः स धर्मपरिणामः। तत्र समवायाद्रूपादिकारणसंस्कारसन्निकर्षान्निष्पन्नो विशेषसंस्कारः स्वरूपसंस्कारः। अनेकद्रव्यसंयोगाद् बहूनां विशेषसंस्काराणां सन्निकर्षात्स्थूलसंस्कारनिष्पत्तिः। स महान् संस्कारः। तस्य पुनर्महतः संस्कारस्याभिव्यञ्जकेन प्रकाशादिसंस्कारेण सान्निकर्षादभिव्यक्तसंस्कारनिष्पत्तिः। एवं निष्पन्नसंस्कारस्येन्द्रियसंस्कारसन्निकर्षात्प्रत्यासन्नसंस्कारो निष्पद्यते। सोऽयं ज्ञाननिष्पत्तिविधौ वस्तुनिष्ठो धर्मपरिणामश्चतुर्थाध्याये **महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरित्यादि** सन्दर्भेण व्याख्यातः।

इन्द्रियार्थप्रसेधनान्निष्पन्नस्य प्रत्यासन्नसंस्कारस्य पुनः पुरुषनिष्ठज्ञानसंस्कारेण सान्निकर्षान्निष्पन्नः संस्कारो बुद्धिसंस्कार उच्यते। स पुरुषेणाध्यवसीयते रक्तं पीतमित्यादि स बुद्धिलक्षणोऽध्यवसायः

संस्कारेषु लक्षणपरिणाम **आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यदिति** तृतीयाध्याये व्याख्यातः ।

इयमत्र पुनरापत्तिः । चेतनो हि पुरुषसंस्कारो ज्ञानात्मा, जडास्त्विन्द्रियार्थप्रसेधनजः संस्कारः । तयोर्वैजात्यान्न सम्भवति सन्निकर्षः । भवति च सन्निकर्षः । तेनार्थसंस्कारस्य ज्ञानानुविद्धत्वं गम्यते ।

अपि च योऽयं जातिगत्याकृतिधर्मविशिष्टोऽर्थसंस्कारो न सोऽध्यवसायात्मा । तस्मिन्पुरुषस्य रक्तत्वपीतत्वादिप्रतिनियत बुद्धिलक्षणोऽध्यवसायो जायते न स प्रतिपुरुषाधीनो यादृच्छिकः पुरुषसामयिको वोपपद्यते न चापौरुषेयो युज्यतेऽध्यवसायः । तस्मादस्ति कश्चित्पुरुषविशेषो येनाध्यवसितमिदं जगत् । एते पदार्थाः, इमानि द्रव्यगुणकर्माणि, एवंलक्षणाश्च सामान्यविशेषसमवाया इति तस्य पुरुषविशेषस्याध्यवसायानुरूपमिदं जगत्पुरुषैरध्यवसीयते । यथैन्द्रजालिकस्य रज्जौ सर्पाध्यवसायान्निबद्धाक्षो रज्जूं सर्पत्वेनाध्यवस्यतीति । स पुरुषविशेषोऽन्तरात्मेति ब्रूमः । तेनाध्यवसितं द्रव्येषु ज्ञानमिन्द्रियार्थसंस्कारसन्निकर्षाद् बाह्यमानं पुरुषैः समभिव्याहाराद् याथातथ्येन गृह्यते । एष ज्ञाननिष्पत्तिविधिरुक्तः । न चान्तरात्मकल्पादन्यकल्पः सम्भवति । न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुमिति ।

तस्य द्रष्टुरध्यवसायात्मकविवर्तानुरूपा हीयं सत्सृष्टिराम्नातेत्युक्तं पुरस्तात् । श्रुतिरप्याह— **तमेव भान्तमनुभाति सर्वं**

**तस्य भासा सर्वमिदं विभाति।** (मुं. २,२,१०) इति। योऽयं सर्वेश्वरः सर्वज्ञः प्राज्ञो नाम तृतीयावस्थं ब्रह्मोक्तं, तद्दर्शनमन्वयमपि पुरुषः पश्यति। नहि कश्चित्तत्रातिद्रष्टुं प्रभवतीति।

यथा बीजात्त्वगस्थिशाखापत्रपुष्पादि नानाकार्यकारणसमूहात्मकवृक्षापेक्षं पुनस्तदनुरूपं फलं निष्पद्यते एवं पुरुषविशेषेणाध्यसितं पदार्थेषु ज्ञानबीजमर्थेन्द्रियमनोबुद्ध्यादिनानासंस्कारापेक्षं याथातथ्येन पुरुषे निष्पद्यते। स ज्ञाननिष्पत्तिविधिरुच्यते।

तच्चैवं निष्पन्नं ज्ञानं द्विविधं। अव्यभिचारि ज्ञानं विद्या। व्यभिचारि त्वविद्या शंसयविपर्ययस्वप्नानध्यवसायात्मिका। विद्या तावत् प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणेति चतुर्विधा। तत्र साक्षादिन्द्रियसन्निकर्षद्वारकं बुद्ध्यपेक्षं चेति द्विविधं प्रत्यक्षम्। लैङ्गिकादिज्ञानानां प्रत्यक्षपूर्वकत्वादादौ प्रत्यक्षनिष्पत्तिविधिमाह –

**गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥४॥**

सान्निकर्ष इति संस्कारसमासे समाख्या। तेन संयोगसमवाययोः सन्निकर्षशब्दो न विधीयते। इन्द्रियार्थसन्निकर्षेणापितत्संस्कारसन्निकर्षो विवक्ष्यते न तत्संयोगः।

साक्षादिन्द्रियसंस्कारैर्येषां संस्कारात्मनां गुणानां सन्निकर्षस्ते सन्निकृष्टा गुणा रूपरसगन्धस्पर्शशब्दा इति। कर्मणां स्पर्शसंस्कारैः सन्निकर्षात्सन्निकृष्टत्वमुक्तम्। एषां सन्निकृष्टगुणकर्मणामेवेन्द्रियद्वारकं प्रत्यक्षं सम्भवति। सङ्ख्यादीनामसंस्कारात्मनामिन्द्रियसन्निकर्षासम्भवान्नास्ति साक्षादिन्द्रियद्वारकं प्रत्यक्षं

तेषां तु बुद्ध्यपेक्षं प्रत्यक्षं वक्ष्यमाणम् ।

सन्निकृष्टगुणकर्मणां द्रव्याश्रितत्वाद् द्रव्यमेव ज्ञानकारण-मुक्तम् ।

**सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥५॥**

द्वयोः श्वेतयोः श्वेतलक्षणा संस्काराः पृथगिन्द्रियसंस्कारैः सन्निकृष्यन्ते तेनोभयत्र श्वेतं श्वेतमिति पृथग्बुद्धी निष्पद्येते। तत्रोभयोः श्वेतत्वे या सामान्याबुद्धिर्जायते न सा द्रव्याधीना सामान्यबुद्धिजनकसंस्कारस्य द्रव्येऽभावात् । तत्र सामान्यज्ञानं तु बुद्धिसंस्कारापेक्षं न साक्षादिन्द्रियार्थसंस्कारविशेषापेक्षम् । द्रव्यगतश्वेतत्वसामान्यापेक्षमेव तज्ज्ञानम् । एवं श्वेते श्वैत्यबुद्धिः साक्षादिन्द्रियार्थसान्निकर्षजन्या, तथा रक्ते रक्तत्वबुद्धिः । किन्तु श्वेतत्वरक्तत्वयोर्या विशेषबुद्धिर्जायते तस्या नास्ति कश्चित् कारणभूतो द्रव्यगतसंस्कारविशेषः । श्वेतत्वरक्तत्वप्रत्यक्षं तु साक्षाद् द्रव्याधीनम् । तयोर्यो विशेषस्तत्सापेक्षं ज्ञानं तु तद-धीनमेव न साक्षाद् द्रव्याधीनम् । द्रव्यगुणकर्मसु ज्ञानं तु सामान्य-विशेषापेक्षं भवति । सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानमिति सान्निकृष्टगुणकर्मभ्य एव ज्ञानं तच्च बुद्ध्य-पेक्षमिति ।

**सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥६॥**

द्रव्यगुणकर्माणि सामान्यानि विशेषाश्च तेषु नानात्वज्ञानं

तु सामान्यविशेषापेक्षम् ।

**द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥७॥**

सन्निकृष्टगुणकर्मणामेवैन्द्रियिकं प्रत्यक्षमुक्तं संस्कारसन्निकर्षात् । द्रव्येषु नास्ति तादृशः कश्चित्स्वकीयः सन्निकृष्टसंस्कारो य इन्द्रियेण सन्निकृष्येत । तस्मान्नास्ति द्रव्यस्य साक्षादैन्द्रियकं प्रत्यक्षम् । तत्प्रत्यक्षं तु गुणकर्मापेक्षं बौद्धं प्रत्यक्षम् । द्रव्याश्रितत्वाद् गुणकर्मणां द्रव्यापेक्षमप्युक्तं द्रव्यज्ञानम् ।

**गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते ॥८॥**

गुणकर्मसु सन्निकृष्टेषु साक्षादैन्द्रियकं प्रत्यक्षम् । तेषु गुणकर्माभावान्न द्रव्यप्रत्यक्षवद् गुणकर्मापेक्षं प्रत्यक्षं विद्यते ।

पूर्वोक्तमर्थमुपसंहरति—

**समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ॥९॥**

पुरुषस्य श्वेतेऽर्थे यः श्वैत्याध्यवसायो जायते तत्र द्वे कारणे । समवायिनि श्वैत्यमिति तल्लक्षणः संस्कारः । तस्मिन्संस्कारेऽन्तरात्मनः श्वैत्याध्यवसायश्च । एवमन्तरात्मनो श्वैत्याध्यवसायस्य-तदनुरूपः समवायिनि श्वैत्यसंस्कारः कार्यं, तस्य पुनः पुरुषस्य श्वेते बुद्धिः कार्यमिति कार्यद्वयम् । ते एते कार्यकारण भूते । एवं संस्कारो नियताध्यवसायश्चेति द्वे कारणे भवतः पुरुषेऽध्यवसायस्य ।

**द्रव्येष्वानितरेतरकारणाः ॥१०॥**

बुद्धय इति शेषः।

द्रव्ये स्वगतगुणकर्मापेक्षं प्रत्यक्षं जायते न द्रव्यान्तरनिष्ठ गुणकर्मापेक्षम्। यत्तु द्रव्यान्तरनिमित्ताद् द्रव्यान्तरे ज्ञानं निष्पद्यते तल्लैङ्गिकं न प्रत्यक्षम्।

**कारणायौगपद्यात्कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥११॥**

घटे समवेतो रूपसंस्कारो घटरूपप्रत्यक्षे कारणमुक्तम्। तत्र दीर्घकालपर्यन्तं दृश्यमाने घटे एक एव दीर्घकालव्यापिप्रत्ययो जायते। तत्र किमेक एव दीर्घकालव्यापी संस्कारो घटादुत्तिष्ठते बहवो वा संस्कारा उत्तिष्ठन्त इत्याह क्षणक्रमेण बहवः संस्कारा अयुगपद् घटादुत्तिष्ठन्त इति। एकस्मिन् क्षणे एक एव संस्कारो घटात्प्रसृत इन्द्रियसंस्कारेण सन्निकृष्ट एकमेव घटाकारप्रत्ययं जनयति, द्वितीयक्षणे द्वितीयं तृतीये तृतीयमित्याद्येते प्रत्यया घट-ज्ञाननिष्पत्तौ कारणभूताः क्रमेण प्रवर्तन्ते। तेषामाशुसंचारा-दालातचक्रवद् घट एकत्वबुद्धिर्निष्पद्यते न हेत्वन्तरफलस्वरूपेय मेकत्वबुद्धिरिति।

इत्यष्टमे प्रथमाह्निकम्।

## अथाष्टमाध्याये द्वितीयाह्निकम्

पूर्वाह्निके साक्षादिन्द्रियसान्निकर्षजन्यप्रत्यक्षनिष्पत्तिविधि रुक्तः। अस्मिन्नाह्निके सङ्ख्याद्यसन्निकृष्टगुणानां बुद्ध्यपेक्षं प्रत्यक्षमुच्यते।

## अयमेष त्वया कृतं, भोजयैनमिति बुद्ध्यपेक्षम् ॥१॥

सन्निकृष्टेऽर्थेऽयमिति बुद्धिः साऽपरत्वबुद्धिः। विप्रकृष्टेऽर्थे एष बुद्धिस्तत्परत्वज्ञानम्। तेनायमेषशब्दाभ्यां परत्वापरत्वयोर्ग्रहणं क्रियते। तत्र परापरयोरामलकयोः सान्निकर्षात् साक्षादैन्द्रियकं रूपप्रत्यक्षम्। परत्वापरत्वयोस्त्वसंस्कारात्मकत्वात्सन्निकर्षाभावान्न सम्भवति साक्षादैन्द्रियकं प्रत्यक्षम्। अस्ति च परत्वापरत्वयोः प्रत्यक्षग्रहणम्। तद्बुद्ध्यपेक्षं प्रत्यक्षम्।

प्रथमे आमलकेऽयंबुद्धिः। द्वितीये एषबुद्धिरित्ययमेषशब्दाभ्यां संख्या गृह्यन्ते। तत्रापि प्रथमाद्यामलकानां साक्षादिन्द्रियसन्निकर्षजं प्रत्यक्षम्। प्रथमत्वद्वितीत्वादिसंख्यानामसंस्कारात्मकत्वान्नास्ति सन्निकर्षजं प्रत्यक्षं, तद्बुद्ध्यपेक्षं प्रत्यक्षम्।

एवमयमेषशब्दाभ्यां पृथक्त्वग्रहणम्। तत्र पृथक्स्थितयोरामलकयोरिन्द्रियसन्निकर्षाद् बाह्यं प्रत्यक्षं किन्तु पृथक्त्वस्यासंस्कारात्मकत्वात्सन्निकर्षाभावान्नास्तीन्द्रियद्वारकं प्रत्यक्षम्। तत् प्रत्यक्षन्तु बुद्ध्यपेक्षम्।

परिमाणविशेषादपि एकस्मिन्नयंबुद्धिरन्यस्मिँश्चैषबुद्धिर्भवतीत्ययमेषशब्दाभ्यां परिमाणं गृह्यते। तस्यापि संस्काराभावादसन्निकर्षान्नोपपद्यते बाह्यप्रत्यक्षम्। तस्य बुद्ध्यपेक्षं प्रत्यक्षम्।

अयमेष इति द्वयोः संयोगिनोर्ग्रहणात्संयोगस्याप्यसंस्कारात्मकत्वाद् बाह्यप्रत्यक्षासम्भवाद् बुद्ध्यपेक्षं प्रत्यक्षमुक्तम्।

एतेन संख्याः परिमाणानि पृथक्त्वसंयोगविभागौ परत्वापरत्वे

इत्येतेषामसंस्कारात्मनां गुणानां साक्षादिन्द्रियसन्निकर्षासम्भवाद् बुद्ध्यपेक्षं प्रत्यक्षमुक्तम् । चाक्षुषत्वं चैषां प्रत्यक्षस्य रूपिद्रव्यसमवायाद्रूपसाहचर्यादुक्तं न रूपवत्वादिति द्रष्टव्यम् ।

एवं कर्मणामपि साक्षादिन्द्रियेणासन्निकर्षाद् बुद्ध्यपेक्षंप्रत्यक्षमुक्तम् । त्वया कटः क्रियते इति कटकर्त्तुः पुरुषस्य प्रत्यक्षं क्रियमाणस्य च कटस्य प्रत्यक्षमिन्द्रियसन्निकर्षजम् । करणव्यापारस्य त्वसंस्कारात्मकत्त्वात्सन्निकर्षाभावान्नास्ति साक्षादैन्द्रियकं प्रत्यक्षम् । तस्य बुद्ध्यपेक्षं प्रत्यक्षम् । चाक्षुषत्वं चास्य पूर्ववद् व्याख्यातम् । एवमेत्र भोजयैनमित्यादिविधिनिषेधात्मकेषु व्यापारेषु प्रत्यक्षनिष्पत्तिविधिर्द्रष्टव्यः ।

## दृष्टेषु भावाददृष्टेष्वभावात् ॥२॥

दृष्टेष्विति विद्यमानेषु । अदृष्टेष्वित्यविद्यमानेषु । विद्यमानेष्वामलकरूपरसादिसन्निकृष्टगुणेषु साक्षादिन्द्रियसन्निकर्षात्प्रत्यक्ष ज्ञानं जायते । संख्याद्यसंस्कारात्मकगुणानां तत्समवायाद् बुद्ध्यपेक्षं प्रत्यक्षं निष्पद्यते । ये गुणा आमलके न विद्यन्ते तेषां यदभावज्ञानं तदपि प्रत्यक्षज्ञानपक्षे न्यस्तं विरोधिप्रत्यक्षत्वात् । न तल्लैङ्गिकमित्यप्यभिप्रायः ।

प्रसक्तप्रकरणान्तरमारभते—

## अर्थ इति द्रव्यगुणकर्मसु ॥३॥

अर्थनिर्देशे द्रव्यगुणकर्मणां व्यस्तानां समस्तानां वा ग्रहणं बोध्यम् । तेन द्रव्यमर्थो गुणोऽर्थः कर्माप्यर्थ इति, परिभाषेयम् ।

शरीरेन्द्रियविषयसंज्ञकं त्रिविधं कार्यद्रव्यमुक्तम्। कारणेभ्यः परमाणुभ्यः समवायनियमेन संयोगात्स्वरूपद्रव्यारम्भ उक्तः। तदेव स्वरूपद्रव्यं समवायविशेषेभ्यः स्वरूपत एवभिन्नं त्रिविधमुक्तं तत्रापि—

## द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥४॥

तेषां स्वरूपाणूनामनेकभूतसमवायात्मकत्वेऽप्येकप्रकृतिकत्व-मुक्तमनेकप्रकृतिकत्वं तु प्रतिषिद्धम्। प्रकृतिभूतस्य समवायिनो गुणानां संयोगिभिः सन्निकृष्योद्भवश्चोक्तः। तत्र घ्राणेन्द्रिय-स्वरूपाणुः पृथिवीपरमाणुप्रकृतिकः। स च परमाणू रूपरसगन्ध-स्पर्शवानुक्तः। घ्राणेन तावद् गन्ध एव केवलो गृह्यते। रूपादि गुणवताऽपि तेन रूपादयो गुणा न गृह्यन्ते, इतीन्द्रियाणामेकैक-गुणग्रहणे व्यवस्थामाह—

## भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥५॥

गन्धज्ञान इति घ्राणेन्द्रिये पृथिवी प्रकृतिः समवायिकारण-मित्यर्थः। अनेकपृथिवीपरमाणुसमूहत्वात् समवायिनः कार्यत्वं पृथिवीभूयस्त्वञ्च। समवायिनि परमाणुसन्निवेशे गन्धेतरस्रो-तसां प्रतिरोधात्तदभिभवः। संस्थानविशेषवशाद् गन्धस्रोत-सामप्रतिरोधादुद्भूतत्वाद् गन्धवत्त्वमुक्तम्। गन्धानेकसवर्ण-संस्कारसन्निकर्षे गन्धसंस्कारमहत्त्वम्। तस्यार्थसन्निकर्षात्केवल-गन्धग्रहणम्। अन्येषां रसादीनां प्रतिरोधादाभिभवादग्रहणमिति। तेन परमाणुबहुत्वतन्त्रमनाभिभूतगन्धतन्त्रं च गन्धग्रहणमित्यर्थः।

इन्द्रियेणैकगुणग्रहणनियममन्यत्र रसादिष्वतिदिशति—

**तथापस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् ॥६॥**

तथाऽप्समवायिकारणकं रसनेन्द्रियम्। अनेकाप्परमाणुसमूहात्मको रसनेन्द्रियसमवायी। तस्य परमाणुबहुत्वाद् भूयस्त्वम्। रसेतरस्रोतसां प्रतिरोधात्तद्गुणानामभिभवः। संस्थानविशेषादेव रससुषीनामप्रतिरोधाद् भूयस्त्वाच्च रससंस्कारस्योत्कर्षः। अविशेषत्वं चास्य सवर्णसंस्कारसन्निकर्षे विशेषाभावात्। तेन संयोगिसंस्कारेण सन्निकर्षाभावो गम्यते। स चाभावः संस्थानविशेषात्संयोग्यभावादेव वा सम्भवति। एवमेव तेजःप्रकृतिकं चक्षुर्वायुप्रकृतिकं च स्पर्शेन्द्रियं व्याख्यातं वेदितव्यमिति।

इत्यष्टमे द्वितीयाह्निकम्।

---

## अथ नवमाध्यये प्रथमाह्निकम्

सत्सम्बन्धात्प्रत्यक्षमुक्तम्। असत्प्रत्यक्षमिदानीमुच्यते। असत्प्रत्यक्षविषयं प्रथमाह्निकम्। तत्रादौ पञ्चभिः सूत्रैः सदसतोर्विवेकमाह—

**क्रियागुणव्यपदेशाभावात्प्रागसत् ॥१॥**

केवलप्रत्ययात्मको निरुपाख्यो भावोऽसदुच्यते। अस्तीति प्रत्ययसामान्यादसदपि भाव एव। बाह्ये जगति विद्यमानो वस्त्वात्मकोऽर्थः सदुच्यते। अस्तीति प्रत्ययसामान्यात्सदपि भाव एव। किन्तु तस्मिन् सदिति प्रत्ययविशेषान्न केवलभावात्मकं सत्,

अपितु सत्तात्मको भावः सदुच्यते । सत्तात्मनि भावे क्रियागुण व्यपदेशो भवति । प्रत्ययात्मनि भावमात्रे तु नोपपद्यते क्रिया गुणव्यपदेशः । नहि कश्चित्प्रत्ययात्मनि मानसे रथे स्थित्वाऽध्वानं गच्छति । तेनासच्छब्देन सत्ताप्रतिषेध उच्यते न भावप्रतिषेधः । तत्तु पूर्वमसत्सृष्टावुपपादितम् । सच सद् घटस्याभावस्त्रिविधो भवति । उत्पत्तेः प्राग् घटाभावो प्रागसत् ।

सदसत् ॥२॥

उत्पत्त्यनन्तरं विद्यमानो घटः सन् । तस्य पुनरपसरणे नाशे वा तत्सदसत् भवति । स घटस्य पश्चादभावः सदसदिति ।

असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥३॥

असदिति शेषोऽनुवर्तते । क्रियागुणवान्सद् घटः । निष्क्रियो निर्गुणश्चासद् घट इति सद् घटादर्थान्तरमसद् घटः । असतोऽर्थान्तरत्ववचनेन स्वतन्त्रपदार्थत्वं प्रतिषिद्धमर्थत्वं चानुज्ञायते । तेन द्रव्यगुणकर्मणामेकतमेऽस्यान्तर्भावः । क्रियागुणव्यपदेशाभावान्न द्रव्यमसद् घटः । नापि कर्म गुणस्तु सम्भाव्यते । कस्य गुणः ? नासद् घटस्योपपद्यते । तस्मिन्गुणव्यपदेशाभावात् । तस्माज्ज्ञानमात्रं आत्मनिष्ठमसद् घट इति ।

अस्याभावस्य तृतीयं कल्पमाह—

सच्चासत् ॥४॥

यत्र सच्चासच्चेत्युभयं युगपद् गृह्यते । विद्यमानो घटः सन्, तस्मिन्पटोऽसन् । एवं पटे घटाभावो घटे च पटाभाव इत्य-

न्योऽन्याभावः सदप्यसदित्युक्तम् ।

अथ पारमार्थिकं नित्यसत्ताशून्यं चतुर्थमसदाह—

**यच्चान्यदसदतस्तदसत् ॥५॥**

सत्तासम्बन्धात् त्रिविधमसदुक्तम् । ततो भिन्नं यत् सत्, तन्नित्यं सत्ताशून्यं तस्मादसदेव तत् । यथा धर्मज्ञानवैराग्यैश्वर्यादयो भावास्तथाऽन्येऽपि निद्रादयो भावाः प्रत्यक्षज्ञानरूपाः पुरुषनिष्ठा विद्यन्ते । ते नित्यमसद्रूपा भवन्ति । अथ चतुर्विधस्यापि सत्ताऽभावस्य ज्ञाननिष्पत्तिविधिमाह—

**असदिति भूतप्रत्यक्षाभावाद् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥६॥**

अभूतं नास्तीत्यनर्थान्तरमिति वक्ष्यमाणत्वादभूतशब्दोनास्त्यर्थः । तथा च भूतशब्दो विद्यमानेऽस्त्यर्थः ।

रूपादिसन्निकृष्टगुणकर्मणां संस्कारात्मकत्वात्साक्षादिन्द्रिय सन्निकर्षजं प्रत्यक्षम् । संख्यादीनामसंस्कारात्मनां च विद्यमानप्रत्यक्षसाहचर्याद् बुद्ध्यपेक्षं प्रत्यक्षमुक्तम् । अभावे तु विद्यमानं प्रत्यक्षं नास्ति तत्र तु भूतपूर्वस्य प्रत्यक्षस्य स्मृतिसंस्कारसाहचर्याद् बुद्ध्यपेक्षं प्रत्यक्षं निष्पद्यते । प्रतिषेधस्य प्राप्तिपूर्वकत्वाद्विरोधि प्रत्यक्षवज्ज्ञानम् ।

**तथाभावे भावप्रत्यक्षत्वाच्च ॥७॥**

निद्रादिनित्यासदात्मनां भावानां सर्वथैन्द्रियकं प्रत्यक्षं नोपपद्यते । तेषां केवलबुद्ध्यपेक्षं प्रत्यक्षम् । तदभावेऽपि भूतपूर्वस्य प्रत्यक्षस्य स्मृत्यपेक्षं प्रत्यक्षम् ।

**एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥८॥**

अनेनैव विधिना घटादीनामभावे प्रत्यक्षं निष्पद्यते ।

**अभूतं नास्तीत्यनर्थान्तरम् ॥९॥**

अभूतमिति नास्त्यर्थः शब्दः । तेन भूतमित्यस्त्यर्थः । परिभाषेयम् ।

**नास्ति गेहे घट इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥१०॥**

नास्ति गेहे घट इति गेहे घटाभाव उच्यते । स चाभावो न घटनिष्ठो घटस्यान्यत्र विद्यमानत्वात् । यत्र तु विद्यमानो घटस्तत्रास्याभावानुपपत्तिः । नाप्ययं घटाभावो गेहनिष्ठस्तस्य विद्यमानत्वात् । तस्मादयं घटाभावो न घटाभावो नापि गेहाभावः । किंतु गेहघटसंसर्गाभावः । संसर्गस्य बुद्ध्यपेक्षं प्रत्यक्षं तदभावस्य तत्स्मृतिपूर्वक विरोधिप्रत्यक्षवज्ज्ञानम् ।

**आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥११॥**

सर्वेन्द्रियानपेक्षं साक्षादात्मना यदर्थग्रहणं तदात्मप्रत्यक्षम् । इन्द्रियमनःसंयोगे रूपादीनां ग्रहणं भवति । न च युगपत्सर्वैरिन्द्रियैः संयुज्यते मनः । ज्ञानायौगपद्याद् व्यासज्यवृत्ति हि मनो विज्ञायते । तस्मात्पर्यायेणैवेन्द्रियैर्मनःसंयोगाः संभवन्ति । संयोगस्तु पुनर्देशविशेषापेक्षो भवति । न च मनस एकस्मिन्नेव देशे सर्वेन्द्रियसंयोगाः सम्भवन्ति । सर्वज्ञानयौगपद्यात् संकरापत्तेः । तेन मनसः प्रदेशभेदान्नाना शुषयोऽनुमीयन्ते, ततश्च संयोगविशेषोपपत्त्या रूपादिविशेषाणां ग्रहणम् । एवं मनसः शुषिविशेषेभ्य आत्म-

मनसोः संयोगविशेषास्तेभ्योबुद्ध्याद्यात्मवृत्तीनां विशेषा जायन्ते। अस्ति च मनसः प्रदेशविशेषो यत्र संयुक्ते आत्मनि सर्ववृत्तिनिरोधो भवति। तदायमात्माऽविशिष्टबुद्धिवृत्या साक्षादात्मन्यात्मानं विजानाति। तत्सर्वेन्द्रियनिरपेक्षमात्मप्रत्यक्षमुक्तम्।

**तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥१२॥**

तेनैव विधिना आत्मेतरद्रव्येष्वपि साक्षादात्मसंयोगात् प्रत्यक्षं जायते।

**असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च ॥१३॥**

एवं समाध्यभ्यासपाटवाद् विवेकजज्ञानप्रतिष्ठायां समाधिं विनापि योगिन आत्मप्रत्यक्षं सर्वार्थप्रत्यक्षं च प्रवर्तते।

**तत्समवायात्कर्मगुणेषु ॥१४॥**

द्रव्येष्वात्मप्रत्यक्षात्तत्समवेतगुणकर्मस्वप्यात्मप्रत्यक्षं भवति।

**आत्मसमवायादात्मगुणेषु ॥१५॥**

आत्मनि प्रत्यक्षे आत्मगुणेष्वात्मप्रत्यक्षं जायते तत्समवायादिति।

**इति नवमे प्रथमाह्निकम्।**

## अथ नवमाध्याये द्वितीयाह्निकम्

साक्षादिन्द्रियप्रत्यक्षं, बुद्ध्यपेक्षं प्रत्यक्षमात्मप्रत्यक्षमिति त्रिविधप्रत्यक्षनिष्पत्तिप्रकारो व्याख्यातः। इन्द्रियनिरपेक्षं साक्षान्मनोद्वारकं मानसं ज्ञानमिदानीं निरूप्यते। तच्च लैङ्गिकं शाब्दं स्मार्तं प्रत्यक्षं चेति चतुर्विधम्। तत्रादौ लैङ्गिकमाह—

**अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥१॥**

अस्येदमिति धर्मधर्मिसम्बन्धो गुणगुणिसम्बन्धः, कर्मकर्मवत्सम्बन्धः कार्यकारणसम्बन्धश्चोच्यते। तत्र सम्बद्धयोरेकतरस्य प्रत्यक्षमनु सम्बद्धस्यापरस्याप्रत्यक्षार्थस्य यज्ज्ञानं तदनुमानम्। तत्र यस्य प्रत्यक्षं तल्लिङ्गमप्रत्यक्षं च लिङ्गी भवति। लिङ्गपूर्वकत्वादनुमानं लैङ्गिकं ज्ञानमुक्तम्। कार्यकारणसम्बन्धे पुनः संयोगिकारणं, विरोधिकारणं, समवायिकारणं वेत्यादिविशेषज्ञानमपि-लिङ्गाद्भवति।

**अस्येदं कार्यकारणसम्बन्धश्चावयवाद् भवति ॥२॥**

तस्मिन्धर्मधर्म्यनुमाने कार्यकारणानुमाने च प्रतिज्ञापदेशनिदर्शनानुसंधानप्रत्याम्नायाश्चेति पञ्च पर्वाणि लैङ्गिकज्ञानस्य पञ्चावयवा उच्यन्ते।

तत्रानुमेयस्यादृष्टार्थस्य निर्देशः प्रतिज्ञा। यथा पर्वतो वह्निमानिति पर्वतेऽदृष्टस्य वह्नेः सद्भावः साध्यत्वेन निर्दिश्यते। अत्रानुमेयार्थसहचारिदृष्टार्थो लिङ्गं, स हेतुर्भवति। साध्यज्ञाने तस्य-निर्देशोऽपदेशो यथा धूमवत्त्वात्। तत्र धूमो दृष्टः स च वह्नेः सहचारीति वह्निं ज्ञापयति। तत्रापि संदिग्धाभिभूतानुद्भूतलिङ्गोद्भावनेनावधारणार्थमौपयिकनानाकारणप्रतिसंधानं युक्तिः। युक्त्यापि लिङ्गावधारणं सम्भवति। सर्वथा लिङ्गमूलं ह्यनुमानम्। प्रासिद्धासंदिग्धे सत्येव तस्मिन्सदनुमानं सम्भवति। यथा योऽयं वाते

सामान्यत उपलभ्यमानः स्पर्शः स वायुलिङ्गं कैश्चिदभिमन्यते भ्रान्तं तत्। सूर्यरश्मिसंयोगाद्दत्वनुरोधात्तत्रव्यभिचारदर्शनादयं स्पर्शः पृथिव्यादीनामपि सम्भवति। अतोऽप्रसिद्धं संदिग्धं चेदं लिङ्गं न व्यतिरेकेण वायुं साधयति। शरीरौष्ण्यापेक्षयाप्ययं स्पर्शो विपरिवर्तमानो दृष्टः। सामान्यतोऽनुष्णाशीतोऽपि ज्वारितेन शीत एव गृह्यते। युक्त्या विद्युदुत्पादनेन तत्रोपलब्धो योऽनुष्णाशीत-स्पर्शः स वायुस्पर्शोऽव्यभिचाराद्वायौ प्रसिद्धासंदिग्धलिङ्गं भवति।

साक्षात्तल्लिङ्गव्याप्तिकस्यार्थस्योदाहरणं दृष्टांतरतन्निदर्शनम्। यथा महानसं, तत्र हि धूमस्य वह्नौ व्याप्तिर्गृह्यते। तेन यथा महानसं वह्निमद्धूमवत्त्वादिति निदर्शनम्। साक्षात्तद्धर्मवद्धि निदर्शनं भवति न धर्मसादृश्यमात्रेण निदर्शनत्वमिष्टम्। धर्मसादृश्यमात्र-मुपमानं तु वस्तुस्वरूपालोचनमात्रे सहायकमुक्तं न तत्साधकं भवति। यथा तरङ्गवानाकाशो जलवदिति तरङ्गवत्त्वसाधर्म्यान्नि-दर्शनं जलम्। किंतु विभुराकाशो जलवादित्यत्र जले विभुत्वप्रतीति-मात्रात् सादृश्यादाकाशे विभुत्वस्वरूपालोचनार्थमुपमानं नानु-मानसाधनावयवो निदर्शनं, जलस्य तत्त्वतोऽविभुत्वादिति ध्येयम्।

सामान्यतो दृष्टेन लिङ्गलिङ्गिसम्बन्धनियमेन निदर्शनाभि संधिरनुसंधानम्। यथा यत्रयत्र धूमस्तत्रतत्र वह्निरिति सामान्यतो दृष्टो व्याप्तिनियमो निदर्शने महानसेऽनुसंधीयते, तथा च महानसमिति।

योऽयमर्थः प्रतिज्ञायामादौ साध्यत्वेनाम्नातः स एव हेत्वादि

भिरनुमानावयवैः सुसाधितोऽसंदिग्धोऽवधारितश्च प्रत्याम्नायः। तदेव निगमनमुच्यते। तदित्थं--पर्वतो वह्निमान्, धूमवत्त्वात्, महानसवत्, यत्र यत्र धूमस्तत्र तत्र वह्निः, तस्मात्पर्वतो वह्निमानिति पंचावयवानुमानोपपन्नोऽर्थः प्रमाणत्वेन परिगृह्यते।

## एतेन शाब्दं व्याख्यातम् ॥३॥

शाब्दमिति शब्दजन्यं ज्ञानम्। तदपि लैङ्गिकं ज्ञानम्। तत्र शब्दो वाचकोऽर्थस्य वाच्यस्येति वाच्यवाचकसम्बन्धे शब्दः प्रत्यक्षं लिङ्गमदृष्टं वाच्यार्थमनुमापयति। यथा गोशब्दः प्रत्यक्षोऽनुमेयेन सत्त्वविशेषेण वाच्येन समयात्संबद्धः प्रसिद्धश्च तस्मिन्निति सत्त्वविशेषं गां लिङ्गयति।

शब्दो वेदस्तत्प्रतिपादितं ज्ञानं शाब्दमाहुः शब्दालिङ्गत्वादिति। तत्र शब्दमात्रं लिङ्गं प्रत्यक्षम्। वाच्यस्यार्थस्य स्वर्गादेरदृष्टत्वात्तत्सम्बन्धस्याप्यदृष्टत्वाददृष्टालिङ्गं शाब्दं ज्ञानं भवति। नहि विशेषेण कृतसंकेतः शब्दः। न च केवलया मीमांसयाऽसंदिग्धो भवितुमर्हति संकेतः। तस्मात्संकेतविशुद्ध्यर्थं लक्षणशास्त्रमाश्रयणीयं भवति। यद्यपि प्रसिद्धः सद्भूतोऽर्थो निगम उच्यते, तथाचाम्नायवचनम्। तथापि तदर्थस्य हेत्वादिभिरुपपादनार्थमिदं लक्षणशास्त्रं पूर्वैः साक्षात्कृतधर्मभिराप्तैः प्रवर्तितम्। यस्तु मूढ एतं स्मृतिशास्त्रमनादृत्य स्वमनीषया वेदमपार्थीकृत्य केवलापार्थकवेदप्रमाणेन प्रवर्तते, स कथमपि धर्मं तत्त्वतो वेत्तुं नार्हति। उक्तं च— **आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना यस्तर्केणानुसंधत्ते स**

धर्मं वेद नेतरः (म. १२.१०३)। इति। शब्दस्यार्थलिङ्गत्वोपपादनार्थमाह—

हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥४॥

हेत्वादयः शब्दाः समानार्थाः। शब्दोऽपदेश एव। अपदेशविशेषादेव व्यपदेश उच्यते।

निष्पत्तौ हितं भवति कारणत्वेनेति हेतुः। ज्ञाननिष्पत्तौ कारणत्वाल्लिङ्गं हेतुः। अपदिशति विज्ञापयति स्वसंबद्धार्थमित्यपदेशो हेतुः। लिङ्गयति विज्ञापयति स्वसंबद्धार्थमिति लिङ्गम्। कार्यते निष्पाद्यते स्वसंबद्धार्थज्ञानमिति करणमित्येवमेते शब्दाः समानार्था बोध्याः।

अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥५॥

सर्वोऽप्यर्थो येन केनापि शब्देनाभिधीयते। देशकालजातिसमयादिभेदाच्छब्दभेदेऽपि शब्दसामान्यस्यार्थसम्बन्धस्तु भवत्येवेति शब्दार्थसम्बन्धो नित्य उक्तः। स च सम्बन्ध सङ्केत उच्यते। तेन हि देवर्षिमनुष्यार्यम्लेच्छानां व्यवहाराः प्रवर्तन्ते।

अस्येदमिति सम्बन्धज्ञानस्य सर्वत्र बुद्ध्यपेक्षितत्वात्संकेतोऽपि बुद्ध्यपेक्ष इति शब्दार्थयोर्लिङ्गलिङ्गिभावोपपत्तेर्लैङ्गिकमुक्तं शाब्दं ज्ञानम्। स्मृतिमाह—

आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः ॥६॥

यथेन्द्रियसंयोगे मनसः सुषय उक्ताः तत्तत्सुषिसंयोगाद् गन्धादिगुणानां पृथग् ग्रहणं भवति। तथैवात्ममनसोः संयोगेऽपि मनसः सुषिविशेषादात्ममनसोः संयोगविशेषा जायन्ते। तत्र

संयोगविशेषादात्मनि विद्यमानपूर्वानुभूतसंस्काराणां मनः सन्निकर्षात्स्मृतिनिष्पत्तिः ।

**तथा स्वप्नः ॥७॥**

तथैवात्ममनसोः संयोगविशेषात् पूर्वानुभूतसंस्कारसन्निकर्षात्स्वप्ननिष्पत्तिः ।

**स्वप्नान्तिकम् ॥८॥**

स्वप्नस्मृतिरपि तथैव निष्पद्यते ।

**धर्माच्च ॥९॥**

पुरुषेण कृतं कर्म द्विष्ठमुक्तम् । ग्रहनक्षत्रादिषु संस्काररूपेणावस्थितं कर्मादृष्टमन्तःकरणे संस्काररूपेण स्थितं कर्म धर्मः । कालवशाद् विपाकोन्मुखेऽदृष्टे धर्मादृष्टसंवेदनाद् धर्मसंस्कारा उद्भूय स्वप्ने आत्मना संन्निकृष्य भाव्यदृष्टफलमपदिशन्ति ।

**इन्द्रियदोषात्संस्कारदोषाच्चाविद्या ॥१०॥**

द्विविधं ज्ञानं भवति । सद्भूतार्थज्ञानं विद्या संशयविपर्यादिव्यभिचारिज्ञानमविद्या । तच्च ज्ञानं बुद्धीन्द्रियसंस्कारसन्निकर्षजम् । आत्मनिष्ठत्वान्नित्यशुद्धा बुद्धिसंस्कारा भवन्ति । इन्द्रियाणां भौतिकत्वाद् द्रव्यदोषाद्रचनादोषाद्वेन्द्रियसंस्कारेषु दोषसम्भवाज्ज्ञानं व्यभिचर्यते साऽविद्या । इन्द्रियेषु मनसोऽपि ग्रहणमुक्तम् ।

**तद्दुष्टज्ञानम् ॥११॥**

तद्दुष्टज्ञानमविद्या न प्रमाणाय कल्पते ।

**अदुष्टं विद्या ॥१२॥**

निर्दोषेन्द्रियेषु निर्दोषा भवन्ति संस्काराः। ततश्च सद्भूतार्थज्ञानं जायते। सा विद्या प्रमाणाय भवति। मानसं प्रत्यक्षमाह—

## आर्षं सिद्धदर्शनञ्च धर्मेभ्यः ॥१३॥

धर्मशब्देन चित्तसंस्कारा उच्यन्त इत्युक्तं पुरस्तात्। ते च त्रिविधा भवन्ति बाह्यार्थनिमित्ताः स्वप्नस्मृतितर्कानुभवात्मानः प्रत्ययात्मकाः। धर्मज्ञानवैराग्यैश्वर्या आत्मसंस्कारा भावात्मकाः। चित्तनिरोधजाः समाधिसंस्कारा योगजधर्मा उच्यन्ते। ते च समाधिसंस्काराश्चित्ते प्रत्ययात्मकानन्यसर्वसंस्कारान् स्वमहिम्ना प्रतिबाधन्ते। तदवस्थे चेतसि या प्रज्ञा सा समाधिप्रज्ञोच्यते, सा च लौकिकप्रज्ञातो भिन्ना भवति। तत्प्रज्ञालोकन्यासादिन्द्रियविरहेणैव साक्षान्मनोऽर्थसन्निकर्षाद्यज्ज्ञानं जायते तन्मानसं प्रत्यक्षं यौगिकं प्रत्यक्षमुक्तम्।

तद्यौगिकदर्शनमालम्बभेदात्पुनर्द्विविधं भवति। यत्र भूतानां स्थूलस्वरूपसूक्ष्माद्यवस्थाक्रमेण ब्रह्मणः शबलस्वरूपमालम्बनीक्रियते, तत्र या समाधिप्रज्ञा तात्सिद्धदर्शनमाहुः। तस्य परमवैशारद्ये सिद्धस्य योगिनो विवेकजं ज्ञानं प्रादुर्भवति। अत्रेदमुक्तम्—

**तारकं सर्वविषयं सर्वथा विषयमक्रमं चेति विवेकजं ज्ञानम्** (यो. द. ३,५) इति। अपि चास्य सिद्धस्य वत्सानुसारिण्यो गाव इव भूतप्रकृतयोऽनुचरीभवन्ति, भूतजयादित्याहुः।

यत्र तु प्राधान्येन शब्दब्रह्म समाधिप्रज्ञायां विषयीक्रियते

तत्रास्य योगिनः शब्दधर्माणामर्थधर्माणां ज्ञानधर्माणां च सर्वविषयं सर्वथाविषयमतीतानागतप्रत्युत्पन्नमेकक्षणोपरूढमार्षं ज्ञानं प्रादुर्भवति। वागधीनत्वात्तदनुविधत्वाच्च सत्सृष्टेरिदमार्षदर्शनं सर्वदर्शनेष्वभ्यर्हिततममाहुः।

बलपक्षेऽपि ब्रह्मणो हि बलं महदिति श्रुतेरचिन्त्यशक्तिर्हि ऋषिः श्रूयते वाचां विजयादुक्तं च मन्त्रशास्त्रे—

यस्यैकाक्षरमात्रेऽपि संसिद्धे स्पर्द्धते नरः।
रविताक्ष्यैन्दुकन्दर्पशंकरानलविष्णुभिरिति॥

यत्तु सर्वकरणनिरपेक्षं साक्षादात्मनाऽत्मनि स्वयंप्रभं सर्वभावज्ञानं तत्तु विज्ञानमात्रं न दर्शनपक्षे न्यस्तं बुद्ध्यपेक्षत्वाद्दर्शनस्य। करणविशिष्टा ज्ञानवृत्तिर्हि बुद्धिरुक्तेति।

इति नवमे द्वितीयाह्निकम्।

## अथ दशमाध्याये प्रथमाह्निकम्

द्वाभ्यामध्यायाभ्यां बुद्धिरात्मगुणः परीक्षितः। सुखदुःखेच्छाद्वेषा इदानीं परीक्ष्यन्ते। सुखदुःखेच्छाद्वेषाणामात्मगुणानामनुभवात्मकत्वाज्ज्ञानसामान्येऽप्येषां बुद्ध्या परस्परेण च वैधर्म्यादर्थान्तरत्वं, न बुद्धावन्तर्भावो, नह्येते बुद्धिसामान्यस्य विशेषा उपपद्यन्त इत्यत आह—

**इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥१॥**

इष्टकारणकं सुखमनिष्टकारणकं च दुःखमित्यनयोः कारणभेदात्परस्परेणार्थान्तरत्वम्। न पुनर्विरुद्धानां वृत्त्यात्मनामेकस्मादेव संयोगान्निष्पत्तिर्युज्यते संयोगविभागवदिति आत्ममनसोः पृथक्संयोगविशेषाभ्यामनयोर्निष्पत्तिरिति मिथोऽर्थान्तरभावः। अन्यत्सुखमन्यदेव च दुःखमिति भिन्नगुणावेतौ। एतेनेच्छाद्वेषयोरपि इष्टानिष्टकारणभेदात्संयोगविशेषाच्चान्येभ्यः सुखदुःखादिभ्यः परस्परेण चार्थान्तरभावो व्याख्यातो वेदितव्यः। एषां बुद्धितोऽर्थान्तरत्वमाह—

**संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥२॥**

अनेककोटिस्पृग्विज्ञानं संशयः। तत्र संशये एकतरस्यावधारणं निर्णयः। स च संशयो बुद्धिधर्मः। निर्णयो निर्णयान्तरप्रतिपत्तिश्च बुद्धिधर्मः। सुखादिज्ञाने तादृशौ संशयनिर्णयधर्मौ न विद्येते। तस्मादेते आत्मगुणा बुद्धितो भिन्ना अनपेक्षगुणाः।

**तयोर्निष्पत्तिः प्रत्यक्षलैंगिकाभ्याम् ॥३॥**

संशयनिर्णययोर्निष्पत्तिः प्रत्यक्षपूर्वकेणानुमानेन भवति। सुखादिषु न तथा पञ्चावयवमनुमानं विद्यते। तस्मादेषां बुद्धेरर्थान्तरभावः। पुनः—

**अभूदित्यपि ॥४॥**

अतीतानागतविषयमनुमानं बुद्धिधर्मो दृष्टः। न सुखादिज्ञानेन तथातीतानागतवृत्तमनुमीयते। तस्मादप्येतेषां बुद्धिज्ञानतो ज्ञानान्तरत्वमुक्तम्। एवमात्मगुणान् परीक्ष्योपलब्धिनियमशेषमाह—

## सति च कार्यादर्शनात् ॥५॥

पृथिवीपरमाणौ गन्धे सत्यपि क्वचित्कार्येषु तदनुपलब्धिर्दृष्टा। अभिभवादनुद्भवाद्वानुपलब्धिरिति चेत् तत्रापि कारणं वाच्यमस्ति। क्वचित्तु भवत्युपलब्धिरित्युदाहरति—

## एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥६॥

एकार्थसमवायिकारणमिति संदिग्धो निर्देशः। गुणकर्मणोः समवायित्वासम्भवाद् द्रव्यस्यैकमात्रार्थस्य समवायिकारणत्वमुक्तमित्येकार्थवचनं वृथा स्यादिति। तस्माच्छ्लिष्टार्थः शब्दः। एकस्यार्थस्य गुणभूतस्य समवायिकारणमेकार्थसमवायिकारणं द्रव्यं वायुस्तत्र स्पर्शैकगुणसमवायात्। एवमाकाशमप्यैकार्थसमवायिकारणं द्रव्यं शब्दैकमात्रसमवायात्। तेनानेकार्थसमवायात्तेजःप्रभृतीनामग्रहणम्।

वायुपरमाणुसमवायिकारणस्तेजःसंयोगी विद्युदणुर्विज्ञायते। तत्रानुष्णाशीतस्पर्शस्य दृष्टत्वादनभिभवानुद्भवयोरदृष्टत्वाच्चैकार्थसमवायिकारणे द्रव्ये गुणस्य नित्योपलब्धिः।

द्वितीयवरणकम्। द्रव्यसमवायिनो द्व्यणुकत्र्यणुकाद्यनेकपरमाणुत्वादनेकार्थत्वं विवक्षितं स्यात्। एकाणुसमवायिकारणकमपि द्रव्यं भवतीतिसूचनार्थं प्रयोगो गम्यते। एतेनाग्निविद्युत्प्रकाशादिस्वरूपाणूनामेकाणुसमवायित्वमुक्तं भवति।

तथा च तेजःप्रभृत्यनेकगुणवद्द्रव्यसमवायिकारणेषु कार्येषु गुणानां क्वचिदनुद्भवाभिभवाभ्यामनुपलब्धिर्दृष्टा। एकार्थसमवायिकारणेषु विद्युदादिषु नित्योपलब्धिरित्यत्र नियमो द्रव्यगुण-

धर्मभेदाच्चोपलब्धिनियमः। (न्या. द. ३,१,३८) इति पुरस्तादुदाहृतः। स च व्युत्पादनीय इति पूर्वोक्तं सुषिवादं परमाणावतिदिशन्नाह—

**एकदेशे इत्येकस्मिन् शिरःपृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥७॥**

एकस्मिन्नपि शरीरे एकदेशे शिरः, अन्यैकदेशे पृष्ठं, अपरस्मिन्नैकदेशे उदरम्। एवमन्यत्र देशेषु च मर्माणि स्वस्वव्यापाराननुभवन्त एकं शरीरमिति गृह्यते। एवं मनसि पृथिव्यादिपरमाणुषु च प्रदेशविशेषा अभ्युपगम्यन्ते। तत्रतत्र संयोगविशेषा सम्भवन्ति। तत्तद्विशेषभ्यस्तत्तद्विशेषगुणानामुद्भवो जायते। एवं वायुपरमाणौ एकमेव स्पर्शस्रोतः। तेजसि रूपस्पर्शौ इति द्वे स्रोतसी। अप्सु रूपरसस्पर्शा इति त्रीणि। रूपरसगन्धस्पर्शा इति चत्वारि पृथिवीपरमाणौ स्रोतांसि प्रतिपद्यन्ते।

अयमप्यत्रानुगमोऽनुसन्धेयः। रूपादिसंस्कारस्याकाशे विभवात्सर्वगुणसंस्काराणामाकाशमाश्रय उक्तः। तथा च श्रुतिः **आकाशो हि नामरूपयोर्निर्वहिता** (छां. ८,१३,१) इति। पुना रूपादिसंस्काराणामधिष्ठानगत्याकृतिजातिरितिविशेषा विज्ञायन्ते। तत्र पृथिवीपरमाणुरधिष्ठानं गन्धसंस्कारस्य। जातिर्योनिरुच्यते। परमाणौ गन्धस्रोतो गन्धसंस्कारस्य योनिर्भवति। एवं रूपस्रोतो रूपसंस्कारस्य योनिरित्यादि तत्तत्स्रोतोविशेषेभ्यस्तत्तद्गुणविशेषाः।

आकृतिविशिष्टः पुनः संस्कारो भवति। योन्यनुरूपा ह्याकृति-

र्भवतीत्याकृतिविशिष्टानि स्रोतांसि गम्यन्ते। एवं पुनस्तद्विशेषे-भ्यस्तद्विशेष इति रूपरसादिसंस्कारविशेषाणामुपपत्तिः। सूत्रे मर्माणीति विरोधिसंयोगाद् गुणानामुद्भवो नाशो वेति सूचितम्। एवं मुखपुच्छकल्पनयाऽभिमुख्येन परमाणोर्गमनोपपत्तिः। उदरादा-कुञ्चनप्रसारणं। पृष्ठादुत्क्षेपणावक्षेपणे उपपद्येते।

न चैवं प्रदेशाभ्युपगमेन परमाणोर्नित्यत्वं व्याहन्यते। अस्मिँ-स्तन्त्रे परमाणोः पारिणामिकी नित्यताऽभ्युपगम्यते न पारमार्थिकी। **अनित्यमिति विशेषतः प्रतिषेधभावः** इति आरम्भवादे सामान्या-पेक्षया विशेषस्य नित्यत्वं व्याख्यातं पुरस्तात्। नापि परमाणो-रकारणवत्त्वं तन्त्रे क्वचित्प्रतिज्ञायते। अकारणवत्त्वं पारमार्थिकं नित्यत्वं तु केवलसन्मात्रस्य व्यतिरेकेणोक्तं **सदकारणवन्नित्य-मिति**।

यत्त्वविवक्षितामपि परमाणोः पारमार्थिकां नित्यतामादाय पर-माणुकारणवादोऽपलप्यते तत्तार्किकपाशानां मतिमान्द्यं प्रौढिवादिनां धौर्त्यमात्रं वेति याप्यं विद्वद्भिरिति।

**इति दशमे प्रथमाह्निकम्।**

---

## अथ दशमाध्याये द्वितीयाह्निकम्

इदमुपसंहाराह्निकम्—

**कारणमिति द्रव्ये कार्यसमवायात् ॥१॥**

समवाय इत्यनेकार्थः शब्द इत्युपपरीक्षणीयः। यत्र सामा-

न्यतोभावमात्रे प्रत्ययस्तत्रानेकानामेकीभवनं समवायनं समवायः। यदान्तर्भावितणिजर्थस्तदाऽनेकानामेकीभावनं समवायः। समवेतानां समूहोऽपि सभवायः। समूहः कार्यम्। तत्कार्यस्य समवाययनाद् द्रव्यं समवायिकारणं भवति। तस्मिन् मेढीभूते हि समवायः प्रतिष्ठते तस्मात्तत्समवायिकारणमुच्यते।

संयोगाद्वा ॥२॥

अन्यानि यानि द्रव्याणि तत्र समवयन्ति समवायिनमाश्रित्य समूहैकदेशीभवन्ति तानि कार्ये संयोगिकारणानि उच्यन्ते। तेन कार्ये द्रव्यस्य संयोगिसमवायिभेदेन द्विधा कारणत्वं भवति।

कारणे समवायात्कर्माणि ॥३॥

द्रव्ये कर्माणि समवयन्तीति द्रव्यकर्मसम्बन्धे समवायशब्दः। द्रव्यं च समवाय्याश्रयत्वात्। तस्मात्कर्मापि समवाये कारणं भवति। तेन समवाये संयोगिपरमाणूनां भ्रमणोत्क्षेपणावक्षेपणाकुञ्चनप्रसारणानि प्रवर्तन्त इत्युक्तं भवति बहुवचनादिति। कारणे इत्युक्तोभयविधे कारणे इत्यर्थः। संग्रहेण ग्रहणं तु कर्मकर्मसाध्यं न विद्यते इति कार्यकारणकर्मणोऽविशेषार्थम्।

तथा रूपे कारणैकार्थसमवायाच्च ॥४॥

रूप इति रूपादिगुणेषु कारणशब्दः। कारणे विद्यमाना रूपादयो गुणाः कार्यगुणेषु कारणानि भवन्ति। कथमित्याह— तथेति समवायिसमवायात् संयोगिसमवायाच्चेति। कारणैकार्थो हि संयोग्युच्यते। चकारः संयोगिसमवायीत्युभयोर्गुणसन्निक-

र्षार्थः । कारणयोर्विभागेन वचनं तु समवायिरूपमेव संयोगिरूपेणोत्कृष्यते न स्वं रूपमिति द्योतनार्थम् । तेन वायो रूपाभावात् संयोगिना तेजसा रूपवताऽपि वायुकार्येषु रूपं नोद्भावयितुं शक्यमिति ।

## कारणसमवायात्संयोगः पटस्य ॥५॥

समवाये सन्निकृष्टगुणकारणतामुक्त्वा संयोगस्यकारणतामाह । यथा पटे कारणानां तन्तूनां संयोगाः परस्परधारणाकर्षणाभ्यां कारणं भवन्ति पटस्य तथा संयोगिसमवायिनोरुभयोः समवेतौ संयोगौ परस्परधारणाकर्षणाभ्यां कारणं भवतः कार्यस्य । पटग्रहणमुत्तरार्थम् । कार्ये संयोगस्यान्यविधामपि कारणतामाह—

## कारणकारणसमवायाच्च ॥६॥

पटस्य तन्तवः कारणं तन्तोरप्यंशवः कारणं तेनांशवः पटस्य कारणकारणमिति । तथैवानेकपरमाणुसंयोगाद् द्व्यणुकत्र्यणुकादिसमूहात्मकं समवायिकारणं भवति । तस्यापि परमाणवः कारणं भवन्ति । तत्रापि संयोगस्य कारणत्वं भवति । एवं संयोग्यणुरपि नानापरमाणुसमवायात्मा भवति । तस्य संयोगिकारणस्यापि परमाणवः कारणम् । तेषां कारणकारणानामपि धारणाकर्षणाभ्यां संयोगः कारणमिति ।

## संयुक्तसमवायादग्नेर्वैशेषिकम् ॥७॥

उष्णस्पर्शविशिष्ट तेजोऽग्निः । स च पृथिवीसंयोगितेजःप्रकृतिकोऽणुः । तस्योष्णता वैशेषिको गुणः । स च वैशेषिको

गुणो न तेजसः स्वाभाविकोऽपितु कार्यस्पर्शः संयुक्तसमवायजन्यः। संयुक्तानां समवाय इति संयुक्तसमवायो द्रव्यसमवाय उच्यते। तेन कार्ये स्वरूपाणावौष्ण्यं सन्निकर्षाज्जायते न कारणे परमाणावौष्ण्यं नाम कश्चिद् विशेषोऽस्ति। एतेन सर्वे विशेषा व्याख्याताः।

इत्थं सूक्ष्मभूतेभ्यः परमाणुभ्यः समवायात्स्वरूपाणूनां सृष्टिः। तेषां पुनः संयोगात्स्थूलभूतानामुत्पत्तिः। तेभ्यः पृथिव्यादिग्रहनक्षत्रगोलानामुत्पत्तिः। गोलानां समवायात्परमाणूनां स्वरूपोत्पत्तिवन्मण्डलसृष्टिः। यथा सौरमण्डले सूर्यः समवायी बुधादयो गोलाः संयोगिनः। एवं नक्षत्रमण्डलं सप्तर्षिमण्डलमित्यादिनानामण्डलसमवायोऽयं ब्रह्माण्डलगोलोऽन्तरात्मनि समवेतो द्रव्यगुणकर्मसामान्यविशेषसमवायात्मा विराट्शरीरः सूत्रात्माऽधिदैवपुरुषः उक्तः।

एवं परमाणुभ्यः शरीरेन्द्रियस्वरूपाणुसृष्टिक्रमेण निष्पन्नं शरीरमात्मनि समवेतम्। सोऽयं पुरुषो व्याख्यातः। तस्याभ्युदयनिःश्रेयससिद्धिरिष्टा। तदर्थं ज्ञानाज्ञानपूर्वकमितिकर्तव्यतारूपानुष्ठानधर्मो व्याख्यातः। स चानुष्ठेयधर्मो द्विविधः। अहिंसादयः साक्षादात्मधर्मा यमा उच्यन्ते। त एव बाह्यसाधनानपेक्षा दर्शनवर्जितत्वाददृष्टा उक्ताः। यद्यप्येते धर्माः साक्षात् सत्त्वनिष्ठा भवन्ति, सत्त्वानुरूपं च शरीरं विधीयते। तस्मादेषां दृष्टमप्यानुषङ्गिकं किञ्चित् फलं भवति। तथापि प्राधान्यतोऽदृष्टप्रयोजना एते साक्षादभ्युदयं कुर्वन्ति।

तपःस्वाध्यायादयः क्रियात्मानो बाह्यसाधनापेक्षा धर्मा नियमा उच्यन्ते त एव दृष्टा उक्ताः । तेषां फलव्यवस्थामाह--

**दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥८॥**

नियमानां तावद् द्विधा फलं भवति। यत्रैते भोगादिकाम्य फलेषु प्रयुज्यन्ते, तत्राभीष्टफलं यथायोगं साधयन्ति। यत्र तु स्वार्थमनुदिश्य नियमार्थमीश्वरार्पणबुद्ध्या कर्तव्यतया लोकहिताय वा प्रयुज्यन्ते, तत्र सत्त्वशुद्ध्यात्मनियमान्निष्पाद्य क्रमेणाभ्युदयं प्रकुर्वन्ति।

अथाधिकारिभेदाद्धर्मो विधीयते। यत्राम्नायोक्तार्थानां प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायेति पञ्चावयवसम्पन्नेन वैज्ञानिकेन विधिना सिद्धान्तोपपत्त्यावधारणपूर्वकं धर्मानुष्ठानं विधीयते स धर्मस्य निगमो नाम सनातनो मार्ग उच्यते। स च निगमो धीधृतिस्मृतिमतां सर्वभावस्वभावज्ञानामध्यात्माधिदैवाधिभूतेति त्रैविद्याधिकृतानां शुद्धसत्त्वानां ब्रह्मर्षिदेवानामेव विधीयते।

यत्राप्तोपदेशादागतं शिष्टैः परिगृहीतं जातिदेशकालकुलपरम्परया प्राप्तमर्थवादोपबृंहितं स्वधर्मोऽयमित्येवान्धश्रद्धामात्रेण स्वीकृत्य धर्मोऽनुष्ठीयते स धर्ममार्गः आगम उच्यते। रजस्तमःप्रधानानां ज्ञानविज्ञानशून्यानां त्रय्यामनधिकृतानां परतन्त्रप्रज्ञानां श्रद्धामात्रोपजीविनां धर्मस्यायमागमो मार्गः प्रायेण विधीयते।

---

१. Theology. २. Religionism.

सर्वेषामागमानां निगम एव मूलं भवति । अधिकारियोग्यतानुरोधेनैषु सिद्धान्ताचाराणां संक्षिप्य भेदेन परिग्रहणं विधीयते ।

यमप्रतिष्ठायामेवाभ्युदयासिद्धिः । यमानां पुनर्नियमानुशीलनात्सिद्धिः । तत्राप्यशुद्धसत्त्वानां लोकमात्रनिष्ठानां याथातथ्येन सर्वनियमानुष्ठानस्याशक्यत्वात्प्रायेणेश्वराराधनमेवैकं नियमेषु मुख्यमाहुः । भक्तियोगेन[1] तत्समभिव्याहाराल्लाघवेन पापक्षयात्सत्त्वशुद्धया नियमेषु योग्यता भवति । ततश्च यमप्रतिष्ठाक्रमेणाभ्युदयः सिद्ध्यति । तथाचोक्तम्—

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ (गी. १८,६६)**
**अपि चेत्सुदुराचारो भजते मामनन्यभाक् । (६,३०)**
**क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति ॥ (९,३१)**

तस्मात्परतन्त्रप्रज्ञानां प्रायेण भक्तिमार्गमेव मुख्यमाहुः ।

यस्मादीश्वरोपासनं धर्ममूलमाहुस्तस्मात्स समीक्ष्यते । स आत्माऽन्तरात्मा परमात्मेति त्रिविध आम्नातः । तत्रायमात्मा भोक्ता, ब्रह्माण्डशरीरो हिरण्यगर्भो भोग्यं, उभयोर्नियामकोऽसावन्तर्यामी परमात्मा प्रेरयिता । तदेतत्त्रयमेकीभूतं परमात्मनः पारमार्थिकं स्वरूपं नैगमानां ब्रह्मोक्तम् । **त्रयं यदा विन्दते ब्रह्ममेतत् (श्वे. १,९)** ।

परतन्त्रप्रज्ञानामागमिकानां[2] मेवंविधे ब्रह्मणि गत्यभावात्तेषां परमात्मैकदेशभूतानां विभूतिनां देशकालस्वभावपरिच्छिन्नानां सर्ग-

१. Devotion. २. Religionists.

देवानामीश्वरत्वेनोपासनं विधीयते। **एकं सद्विप्रा बहुधा वद- न्तीति** नानेश्वरा आगमा भवन्ति।

तत्र केषांचिदीश्वरः पुरुषोऽन्येषां स्त्रीरूपः। क्वचिन्मद्य- मांसादिप्रिय ईश्वरः, क्वचित्तु ततो विजुगुप्सते। केषांचिदीश्वरः शंखादिवादित्रैः प्रसीदतीतरेषां तावत्ततो बिभेति। केषांचिदीश्वरो दैत्ययोधी, अन्येषां तु भस्मासुरभयात्पलायते, इतरेषां तावत्प्रति- स्पर्धिना केनचिच्छातनाख्येन दैत्येन मुहुर्मुहुरर्द्यमानो भग्नसंकल्पो विमनाश्च श्रूयते। केषांचिदीश्वरो वैकुण्ठाख्यं लोकविशेषमधि- तिष्ठत्यन्येषां कैलासवासीतरेषां तावत्कचित्सप्तमे आकाशे कृत- परिग्रहः श्रूयते। एवं प्रत्यागममीश्वरा देशकालस्वभावपरिच्छेदाद् भेदेनागमिकैरभ्युपगता दृश्यन्ते। नचैकस्मिन्नाद्वितीये परमात्म- न्येवंविधो व्याघातो युगपत्सम्भवति, तस्मान्नानैवागमिनामीश्वरा भवन्ति।

वस्तुतस्तु एकमेवाद्वितीयं ब्रह्म जायमानमपि सर्गार्थं प्रकृति- भूमभिर्बहुधा विजायमानं श्रूयते, तथाहि—**यथाग्नेर्ज्वलतो विस्फुलिंगा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथाऽ- यतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवा देवेभ्यो लोकाः (कौ. ३,३)** इत्यधिकारिस्वभावानुरोधाद**व्यक्ता हि गतिर्दुःखं देहवद्भि- रवाप्यत** इति न्यायात्तत्तल्लोकाधिष्ठातृदेवतामीश्वरत्वेनोपदिश्य, इष्टदेवतोपासाविहितसिद्धान्ताचारप्रधाना नानाभेदविशिष्टा आचार्यै- रागमाः प्रवर्तिता भवन्ति तस्माद्धर्मैकदेशमागममाहुः।

तत्रापि वैदिको वेदबाह्यश्चेति द्विविध आगमो भवति। वैदिकागमेष्वात्ममन्त्रेश्वरदेवतानामभेदेनोपासनं विधीयते उक्तञ्च—

**मन्त्ररूपी भवेद् देवो देवरूपी गुरुर्भवेत्।**
**गुरुरूपी भवेदात्मा, आत्मरूपी मनुर्भवेत् ॥**

गुरुरत्र सद्गुरुरुक्तः स हि क्लेशकर्मविपाकाशयैः रहितो देशकालानवच्छेदात्पूर्वेषामागमेश्वराणां सर्गदेवानामपि परमगुरुरुच्यते तथाचोक्तम्––

**ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं,**
**द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।**
**एकं नित्यं विमलमचलं सर्वदा साक्षीभूतं,**
**भावातीतं त्रिगुणरहितं सद्गुरुं तन्नमामि ॥**

इतीश्वर एवात्र गुरुरिष्टो न देशिकमात्रः कश्चिन्मनुष्यः इत्यभेदोपासनमात्मयजनमुक्तम्।

वैदिकागमेन चरन्तोऽनन्यभाजः सत्त्वशुद्ध्या निरभिनिवेशाः सोपानक्रमेणेहैव जन्मान्तरे वोत्कृष्टादुत्कृष्टतरं मार्गमधिकुर्वन्त आगमान्निगममासाद्य मुच्यन्ते। प्रज्ञाप्रसादाच्छोचतां मन्दमतीनां श्रद्धारक्षणार्थं तत्तद्धर्माञ्जोषयन्ति न च तेषां बुद्धिभेदं जनयन्ति।

यस्माद्वेदादृते आत्मैक्यज्ञानं न सम्भवति तस्माद्वेदबाह्यागमेषु भेदेनोपासनं विधीयते। तेषां तु पूर्वोक्तदेशकालस्वभावावच्छिन्ना देवतैव पारमार्थिक ईश्वरोऽन्यागमाभ्युपगतेश्वरेभ्यो भिन्न आत्मतोऽपि भिन्न इत्येते भेददर्शिनो मूढा ईश्वरनिन्दकाः परधर्म-

निन्दकाश्चोत्कृष्टधर्मद्वेषिणोऽसूयकाश्चाभिनिवेशात्कलिमेत्र विवर्द्धयन्तो लोकस्य महद्वैशसमुपस्थापयन्ति ।

एवं व्यवसिते लोके स्वभावतो दुर्गमोऽप्ययं नैगमो महामहिमा सनातनो धर्मः सुतरां हीयमान उच्छेदं प्राप्नोति । कालक्रमेण मूढोपदेदृष्ट्दोषात्तन्मूला आगमा अपि व्यभिचर्यन्ते । निगमागमविमुखोऽयं लोकोऽधर्मप्रायो भवति । जनाः प्रायेणासूयकाश्चण्डा औपधिका रौद्रस्वभावा आत्मपूजका अमर्षणा अनुबन्धकोपाश्छिद्रप्रहारिणः साहसिकाः क्रूरकर्माणो भीरवो भीषयितारोऽर्थकामलोलुपा अतिप्रवृद्धलोभरोषमोहमदमात्सर्या अतिक्रान्तशासनाश्च भवन्ति । देशनगरनिगमजनपदप्रधाना अपि प्रायेणाल्पसत्त्वा भाग्यहीनाः क्षुद्राशयाः प्रज्ञापराधादात्मपूजार्थं संघबलमान्विच्छन्तो लोकरञ्जनायाधर्ममेवाभिवर्धयन्ति । सत्त्वह्रासाच्छासनेऽशक्ताः शास्त्रैकसाध्यानप्यार्थाँच्छस्त्रबलेन सिषाधयिषन्तो प्रजानाशाय प्रवर्तन्ते । परिणामतः स्वयमपि विनश्यन्ति ।

एवं व्यवसिते समष्ट्यदृष्टवशान्नक्षत्रग्रहचन्द्रसूर्यानिलानलानां मण्डलानि विक्रियन्ते, ऋतवो व्यापद्यन्ते तेनातिवृष्टिरनावृष्टिर्विवृष्टिर्महायुद्धं महारोग इत्यादीतिभिरयं लोको निरध्यक्ष इव नश्यति ।

यस्माद् दृष्टं विना नादृष्टं प्रतिकर्तुं शक्यं, न च समष्ट्यदृष्टमापूर्तशतैरपि जनयितुं शक्यमृते इष्टधर्मात्, तच्चेष्टं यज्ञादिश्रेष्ठतमं कर्माम्नायैकसाध्यं भवति तस्मान्निगमं धर्ममूलमाहुः ।

तस्य यथान्यायं परिरक्षणाद् धर्मरक्षा ततश्च लोकरक्षणं सम्भवति।

शासनाधीनं च रक्षणं। शासनं पुनर्दण्डाधीनम्। तस्य प्रणयनं पुरुषस्वभावाधीनं प्रायेण लोकपीडनाय दुष्प्रयुक्तं दृश्यते। एवं सति किंशरणमित्युक्तं मनुना—

**तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।**
**ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः॥** (म. ७,१४)
**तस्य सर्वाणि भूतानि स्थावराणि चराणि च।**
**भयाद् भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च॥** (१५)

श्रुतिरप्येकमात्रं ब्रह्मदण्डमेवानुशासनकारणमाह —**तत्सत्यं वै बले प्रतिष्ठितं**। अपि च

**भयादस्याग्निस्तपति, भयात्तपति सूर्यः।**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥**
(क. २,६,३) इति

तदात्मतेजोभवो ब्रह्मदण्डस्त्वात्मविदा सत्यसन्धेन धार्मिकेणैव धारयितुं प्रणेतुं च शक्यस्तस्मादेव चास्याऽस्थाने प्रयोगो न सम्भवति। तदेतत्सर्वं तत्राधिकृतैर्धर्मकोशगोप्तृभिर्निगममार्गमास्थाय यथायोगं विधातव्यमित्येष निदानतो निगमोक्तो सनातनधर्मस्य पन्था व्याख्यातः।

## तद्वचनादाम्नायस्य प्रामाण्यम् ॥९॥

य एवाम्नायप्रतिपादितास्त्रिकल्पो धर्म ऋषिभिः समग्विज्ञाय श्रुतिस्मृतिन्यायेतित्रिभिः प्रस्थानैर्व्याख्यातः स एवात्र वैशेषिकेन वर्त्मना व्याख्यातः। यश्चात्र धर्मो व्याख्यातः स एव वेदेऽपि

प्रतिपादितः। नह्यत्र स्मृतौ वेदविरोधी वेदबाह्यो वा कश्चिदर्थः प्रतिपादितः।

येषां त्वन्य आम्नायोक्तो धर्मोऽन्यश्चौपनिषदो धर्मोऽन्य एव च बौद्धदर्शनवत्स्वतन्त्रबुद्धिसाध्यः स्मार्तो धर्मस्ते महामहिमानमिमं स्मार्तधर्मविज्ञानं प्रतिपत्स्यन्त इत्युन्मत्तप्रलापमात्रं मन्दबुद्धीनां स्वपक्षमूढानाम्। अत्र स्मृतिकृतां समयमनुसृत्यैव तद्व्याख्यानं कर्तुं युज्यते। नहि शास्त्रकृत्प्रतिज्ञामनादृत्य तद्व्याख्यातुमर्हति। तदनादर एव विरोधवादस्य मूलकारणं भवति। तमेव विरोधवादमाश्रित्य स्वपक्षदोषादतिप्रमाणेऽपि स्मृति शास्त्रे नाना सम्प्रदायाचार्यैर्वैदिकंमन्यैर्नाना व्याख्यानानि प्रवर्तितानि। तस्मात्तद्व्याख्याने शास्त्रकृतां समयः सर्वथाऽनुसरणीयः। स चोक्तः—

**नैयायिकार्थमालोक्य तथा हीश्वरकारणम्।**
**प्रतिष्ठानानि वेदस्य एते तर्का उदाहृताः॥**
**प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्।**
**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥**

(बृ. यो. या. १२,१८–१६)

**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥**

(म. १२,१०६)

इति ईश्वरकारणवादं सम्यक् प्रतिष्ठाप्य वेदोक्तविद्यास्था-

नान्यालोच्य वेदाविरोधिसत्तर्कमाश्रित्याचार्यमतं सम्यग्विज्ञायेदं स्मृतिव्याख्यानं यथामतिकृतम् ।

सर्वः सर्वं न जानाति, सर्वज्ञो नास्ति कश्चनेत्यनुगृह्य तत्व-बुभुत्सुभिः सुतरां विधिवद् विज्ञाय संशोध्य परिग्राह्यम् ।

त्रिलोकबुद्धिनिर्गमे कलौ श्रुत्येकधर्मके ।
प्रवृद्धलोभमत्सरैर्विमर्शशीलमायिकैः ॥
विलुप्तवेदभास्करे विमोहरात्रिनाशनम् ।
सुभाष्यकं तु काशिना भवे गुरौ समर्पितम् ॥

इति काणादे वैशेषिकदर्शने काशीयं वेदभास्करभाष्यं समाप्तम् ।

॥ समाप्तश्चायं ग्रन्थः ॥

---

# शुद्धिपत्रम्

| पृ. पं. पादः | शुद्ध पाठः |
|---|---|
| ६-१७-४ | रनुमितसद्भावः |
| ९-२३-१ | Casuistry |
| १०- १-१ | नास्त्यभ्युदयः |
| १०- ४-२ | परायणाश्च |
| १०-१३-३ | मैश्वर्यम् । |
| १४- २-२ | कर्ता |
| १४- २-३ | मुपहन्या |
| १५- १-२ | प्रमेयशास्त्रम् |
| १८-२०-२ | श्रुतमतमविज्ञातं |
| १८-१९-१ | विदाँश्चक्रुः |
| २१-१०-२ | धर्मशास्त्राङ्ग |
| २३- २-४ | व्यापारो |
| २५- ४-१ | पुरिशयनाद्वा |
| ३१-१४-४ | क्रमेणाजायत |
| ३२- ४-१ | योनिरुक्ता |
| ३२-१०-१ | सृष्टिः |
| ३३-२१-१ | परिणमयति |
| ३३-२२-१ | Idealism |
| ३९- ९-४ | कारणं |
| ४८-१०-१ | सांख्यतन्त्रं |
| ४८-११-४ | सांख्याचार्येण |
| ५९-११-४ | म्लेच्छासुराणां |
| ६३- १-२ | प्रयुक्तः |
| ६३- ३-१ | प्रयुक्तः |
| ७०-१२-१ | ब्रह्मदर्शने |
| ७०-१६-२ | कार्येषु |
| ९६- ६-४ | ष्वकारणमन० |
| १३५-१०-१ | साधितम् |
| १३७- ७-२ | पुरुषाधिष्ठित |
| १३८- ७-२ | तूभयथा |
| १३९- ८-२ | प्रत्याचष्टे |
| १४१- ६-१ | कार्यम् |
| १४५-१८-१ | सुखदुःखे |
| १४७-१५-१ | निष्पन्नं |
| १५५-१०-३ | उच्यते |
| १६३-१९-१ | प्रत्यक्षादि |
| १६८- ६-४ | द्रव्याणि |
| १६९-१६-४ | चोत्क्षेपण |
| १८२- ५-१ | जन्ममरण |
| १८४- ६-२ | दिग्व्याख्याता |
| १९०-११-३ | पुरुषस्य |
| २०८-११-४ | परिच्छिन्नत्वं |
| | (अविरामश्च) |



# शुद्धिपत्रम्

| पृ. | पं. | पादः | पठनीयम् | पृ. | पं. | पादः | पठनीयम् |
|---|---|---|---|---|---|---|---|
| २५ | १० | ४ | धर्मद्वैते | १८६ | १७ | १ | ह्री० |
| २५ | २१ | ३ | शीलं सत् | १९० | ५ | ३ | आत्मनस्तेन |
| ३० | १ | १ | चेतनैव | २१२ | १८ | (अन्ते) | इत्ययं पक्षस्तु नावकल्पते संयोगोत्क्षेपणाभ्यामेव तदुपपत्तेः। तेनान्यतरोत्क्षेपणज उभयोत्क्षेपणजः संयोगजश्च विभाग इत्यर्थः। |
| ३० | ११ | १ | पारिमाण्डल्यस्य | | | | |
| ३६ | ६ | २ | तेन त्रिगुणं सत् | | | | |
| ४७ | १३ | ३ | अहङ्कारस्य (delete) | | | | |
| ५८ | १९ | १ | प्राजापत्यत्व० | | | | |
| ६० | १७ | १ | पाखण्डहेतुवादांश० | २२२ | १ | २ | सन्निकर्षजं प्रत्यक्षं |
| ६४ | ८ | १ | तत्राव्याप्ति० | २५३ | ५ | १ | धर्मं प्रपत्स्यन्ते |
| १३५ | १० | ३ | ०कर्मत्वनिर्धारणे | २५३ | ७ | ३ | नहि कश्चित् |
| १३५ | ११ | (अन्ते) | उभयात्मकः शब्दः | २५४ | ५ | ३ | श्रुतैक० |

# अथ वैशेषिकदर्शने
## वेदभास्करभाष्यानुसारिसूत्रभाषाविवृतिः
### प्रथमाध्याये प्रथमाह्निकम्

अथातो धर्मं व्याख्यास्यामः ॥१॥ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ २ ॥ तद्वचनादाम्नायस्य प्रामाण्यम् ॥३॥

तर्क[illegible] के अनन्तर अब पदार्थ धर्मों को कहते हैं। पदार्थों के [illegible]य गुण कर्म स्वभाव को धर्म और पदार्थ को धर्मी कहते हैं। यह धर्म का स्वाभाविक स्वरूप धर्म का प्रथम कल्प है। अर्थों में अवयवों का परस्परापेक्षसंस्थान धर्म का दूसरा कल्प है। जैसे सुवर्ण खण्ड में अवयवों का संस्थान एक धर्म है। कुण्डलाकार अन्य धर्म है। और कटकाकार का और ही संस्थान धर्म है। यह धर्मी और उसके स्वाभाविक तथा संस्थानधर्म अतीन्द्रिय हैं, इनका प्रत्यक्ष नहीं होता। इन धर्मों के आधार पर अर्थों में जो रूप, रंग आकारादि उत्पन्न होते हैं, उन को लक्षण धर्म कहते हैं। पदार्थों में इसी तीसरे धर्म का प्रत्यक्ष होता है। संस्थानधर्म के अनुरूप वस्तु में लक्षण पैदा होते हैं। वस्तु में अभीष्टलक्षण उत्पन्न करने के लिये उसके संस्थान को तदनुरूप बदलना पड़ता है। तदर्थ जो इतिकर्तव्यता है वह अनुष्ठान धर्म, धर्म का चतुर्थ कल्प है ॥१॥

